| | | | |
|---|---|---|---|
| ६७ | २४ | निर्व्विकल्पो | निर्विकल्पा |
| ७२ | १५ | यो ऽह | योऽहम् |
| ७६ | २ | निश्चलोह | निश्चलोऽहम् |
| ८१ | १८ | देहद्वावहंभाव | देहाद्यावहंभाव |
| ८४ | २५ | उपबृंहणात् | उपबृंहणात् |
| ८५ | १९ | अखण्डैकरसा | अखण्डैकरसो |
| ८८ | ५ | सर्वचिह्नर्जितं | सर्वचिह्नवर्जितं |
| ९६ | ११ | मैत्रेय | मैत्रेयि |
| ९९ | १७ | स्वातिरिक्ततां | स्वातिरिक्तानृत० |
| १०१ | १६ | सश्रयो | संश्रयो |
| १०५ | २२ | स्वरूपाक्यानि | स्वरूपवाक्यानि |
| १०६ | १० | न्मुच्यते | न्मुच्यन्ते |
| १०६ | २१ | अग्राक् | अवाक् |
| १०६ | २४ | अलिङ्ग | अलिङ्गम् |
| १०७ | ५ | प्रकारा | प्रकारं |
| १०७ | १२ | अतः० | अन्तः० |
| ११२ | १७ | कामादिनृत्यधर्मा | कामादिवृत्यधर्मा० |
| ११७ | ४ | स्वप्नावस्तात् | स्वप्नावस्तात्स्वपरिणाव |
| ११७ | १५ | स्वरूपवाक्यानि | स्वरूपमहावाक्यानि |
| ११८ | ४ | सर्वम् | ऽहंसर्वम् |
| ११८ | १७ | प्रत्यधिक० | प्रत्याधिक० |
| १२० | ३ | भासमनमभास्वरम् | भासमानमाभास्वरम् |
| १२० | १३ | ब्रह्मांभये | ब्रह्माभयम् |
| १२५ | १० | प्रच | प्रज्ञ |
| १२६ | ११ | ज्ञानं | ज्ञानम् |
| १३४ | १५ | तस्यजन्मोच्च० | तस्यजन्मोत्थ० |
| १३६ | १७ | काष्ठवत् | काष्ठवत |
| १४१ | १३ | विमुक्तिः | विमुक्तिः योयोगि-<br>भिरात्मेति गृहीत |
| १५७ | २ | यदंश | विदेह |



# महावाक्यरत्नावली ।

## टीकाटिप्पणीसहिता ।

ॐ श्रीमद्विश्वाधिष्ठान परमहंस सद्गुरु श्रीरामचन्द्राय नमः । योविध्यादिविदेहान्त महावाक्यार्थ विग्रहः श्रीरामचन्द्र रूपाय तस्मै भूमात्मने नमः ॥१॥

( टीका ) महावाक्यरत्नावलीपदयोजना । प्रार्थना । अनन्तशक्तिसन्दोहपूर्णस्य परमात्मनः । विघ्नविध्वंसिनीशक्तिं गणराजमुपास्महे । ईशाद्युपनिपत्प्रोद्यन्महावाक्यकलेवरम् । विकलेवरकैवल्यं रामचन्द्रपदं भजे ॥ विश्वाधिष्ठानसन्मात्रवासुदेवेन्द्रमूर्त्तये । श्रीदेशिकस्वरूपाय परस्मै ब्रह्मणे नमः ॥ नत्वा श्री देशिकं ब्रह्म मात्रानन्दाप्तिमिच्छताम् । महावाक्यरत्नजातकिरणावलिरीर्यते ॥ इह खलु परमदयाकलेवरेऽयं भगवतिलीलाविभूतिस्वांशजप्राणिपटलनिष्प्रतियोगिकनिर्विशेषब्रह्ममात्राप्तये ऋगादिचतुर्वेदप्रविभक्तेशाद्यष्टोत्तरशतोपनिषत्प्रसिद्धाष्टोत्तरसहस्रमहावाक्यरत्नान्युद्धृत्य विध्यादिविदेहान्तभेदेन त्रयोदशधा विभज्य तत्र स्वरूपमहावाक्यजातं नानालिङ्गाद्यवशिष्टान्तभेदेनाष्टधा विधाय च मुख्याधिकारिणमुद्दिश्य तदर्थमुमुक्षूणां परस्परसापेक्षतो महावाक्यरत्नजातप्रकाशकैकोत्तरसप्तशतप्रकरणगर्भितप्रभावलि तद्भासकलोचनञ्च ग्रन्थं प्रकटयामास । तस्यातिविस्तरत्वेन परिहताधिकारात् तदवलोकनासमर्थानुकम्पयानुबन्धचतुष्टयवद्द्विशतिप्रकरणगर्भितविध्यादिविदेहान्तमहावाक्यपदयोजनां प्रतिजानान उपो-

द्घातप्रकरणस्य श्रीरामचन्द्रं छन्दोमयाङ्गतया नमस्करोति य इति सर्वं खल्विदं ब्रह्मेत्युपक्रम्य विदेहमुक्त एव स इत्यन्तविध्यादिविदेहमुक्त्यन्तमहावाक्यानामर्थो निष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणविकलेवरकैवल्यं तदेव विग्रहो यस्य स तथोक्तः तं श्रीवासुदेवेन्द्राभिधं प्रणौमि श्रीगुरुचरणानुसन्धानं करोमीत्यर्थः ।

यःपूज्योयतिभिः स्वधर्मनिरतैर्ध्यायन्ति यं योगिनो-
येनात्तं निगमान्तवेद्यमनिशं यस्मै हविर्दीयते । यस्मा-
त्स्थावरजंगमं समभवद्यस्यांशमात्रोवरो यस्मिन्
लीनमिदं प्रणौमि सततं तं वासुदेवं गुरुम् ॥ २ ॥

( टीका ) यच्छब्दसप्तविभक्तिभिरस्मद्देशिकस्य ब्रह्मविद्वरिष्ठत्वेन सर्वेश्वरत्वं प्रत्यगभिन्नब्रह्मत्वं निष्प्रतियोगिकब्रह्ममात्रत्वञ्च स्वतः सिद्धमित्याह य इति । स्वातिरिक्तानात्मनिरसनपूर्वकं स्वात्ममात्रमापकोधर्मः स्वधर्मस्तत्रैव निरतास्तन्निष्ठास्तैर्यतिभिः पूज्यः स्वाश्रमाचारसम्पन्नत्वात् । योगिनो यमीशत्वेन ध्यायन्ति येनैव समस्तनिगमान्तवेद्यं ब्रह्मस्वमात्रमित्यात्तं सम्यग्ज्ञानिनोनि-

प्रणम्य विभुमात्मानं सच्चिदानन्दविग्रहम् ।
व्याख्यातार्थावबोधाय क्रियते टिप्पणी स्फुटा ॥ १ ॥

( टिप्पणी ) विकलेवरकैवल्यमिति विगतं कलेवरं शरीरं यस्मिन् तत्तथाभूतं कैवल्यं यस्मात् तदित्यर्थः । श्रीदेशिकमिति उपदेष्टारमित्यर्थः । परमदयाकलेवरेयमिति अयं ग्रन्थकारः । वक्ष्यमाणं प्रकटयामासेतिक्रियाकर्त्तुः प्रथमान्तपदोपस्थाप्यत्वात् । परमदयाकलेवरे इति परमदयैव कलेवरं यस्य तस्मिन् । लीलेति लीलाविभूतिस्वांशजप्राणिपटलकर्तृकनिष्प्रतियोगिकनिर्विशेषब्रह्मस्वरूपकर्मकावाप्तये इतिबोधः । तत्रेति विध्यादिविदेहान्तभेदेन त्रयोदशसु भेदेषु । तदर्थंमुमुक्षूणामिति अष्टविध स्वरूप महावाक्यार्थं बोद्धुमिच्छूनाम् । छन्दोमयाङ्गतयेति छन्दोरूपशरीरतया ।

रावृत्तेश्वरत्वात् । स्वेष्टसिद्धये यस्मै वैश्वानररूपाय हविर्दीयते । यस्मादीशभावमापन्नात् स्थावरजङ्गमात्मकं जगत् समभवत् । यस्यांशमात्रोऽवरो जीवपूगो भवति· ममैवांशो जीवलोके जीवभूतः सनातन इतिस्मृतेः । यस्मिन् प्रत्यगभिन्ने ब्रह्मणि परिदृश्यमानमिदमविद्यापदं लीनं प्रलयमुपैति तं प्रत्यगभिन्नब्रह्मरूपं प्रत्यक्परविभागासह ब्रह्ममात्ररूपं वास्मच्छ्रीगुरुं श्रीवासुदेवेन्द्राभिधं प्रणौमि श्रीगुरुचरणानुसन्धानं करोमीत्यर्थः ॥ २ ॥

नत्वाश्रीवासुदेवेन्द्रपादपङ्केरुहद्वयम् । अथ्यते वै महावाक्यरत्नावलिरियं मया ॥३॥ अथ खलु ऋग्वेदादि विभागेन वेदाश्चत्वारः, तत्रैकविंशतिशाखा ऋचः, नवाधिकशतं शाखायजुषः, सहस्रशाखाः साम्नः, पञ्चाशच्छाखा अथर्वणस्य, । एकैकस्याः शाखाया एकैकोपनिषत् आहत्याशीतिसहितशताधिकसहस्रसंख्याका उपनिषदः तासु श्रीरामचन्द्रेण रामदूताय सारतरोपनिषद् अष्टोत्तरशतसंख्याका उपदिष्टाः तथाच मुक्तिकोपनिषत्स्थाष्टोत्तरशतोपनिषन्नामबोधकाः श्लोका लिख्यन्ते ॥

(टीका) उक्तविशेषणविशिष्टं देशिकं नत्वा महावाक्यरत्नावलीं प्रतिजानीते नत्वेति ॥३॥ अथ्यमानमहावाक्यरत्नावल्याश्चतुर्वेदप्रविभक्तेशाद्यष्टोत्तरशतोपनिषत्सारसंग्रहतां प्रकटयितुं वृत्तमनुकीर्त्तयति अथेति । तथाच मुक्तिकोपनिषद्याम्नायते । ऋग्वेदादिविभागेन वेदाश्चत्वार ईरिताः । तेषांशाखाह्यनेकाः स्युस्तासूपनिषदस्तथा ॥ ऋग्वेदस्य तु शाखाः स्युरेकविंशति संख्यया । नवाधिकशतं शाखाय-

(टि०) यच्छन्दसप्तविभक्तिभिरिति यच्छब्दोत्तरसप्तविभक्तिभिः निरावृत्तेश्वरत्वात् । आवरणशून्येश्वरस्वरूपत्वात् ॥ २ ॥

नुपोमारुतात्मज ! ।। सहस्रसंख्यया जाताः शाखाः साम्नः परन्तप । अथर्वणस्य शाखाः स्युः पञ्चाशद्भेदतोहरे ।। एकैकस्यास्तु शाखाया एकैकोपनिषन्मता । तासामेकामृचं येन पठ्यते भक्तितोमयि।। समस्तसायुज्यपदवीं प्राप्नोति मुनिर्दुलभाम् । माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये ।। तथाप्यसिद्धं चेज्ज्ञानं दशोपनिषदं पठ । ज्ञानं लब्ध्वा चिरादेव मामकं धाम यास्यसि ।। तथापि दृढता नोचेद्विज्ञानस्याञ्जनीसुत द्वात्रिंशाख्योपनिषदं समभ्यस्य निवर्त्तय । विदेहमुक्ताविच्छाचेदष्टोत्तरशतं पठ इति ईशाद्यष्टोत्तरशतोपनिषदां शाखाभेदं दर्शयति तत्रेत्यादिना ।।

ईशाकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः । ऐतरेयश्च छान्दोग्यं बृहदारण्यकन्तथा ।। १ ।।
ब्रह्मकैवल्यजाबाली श्वेताश्वो हंस आरुणिः । गर्भो नारायणो हंसोबिन्दुनादशिरः शिखा ।। २ ।।
मैत्रायणीकौषितकी बृहज्जाबालतापिनी । कालाग्निरुद्रमैत्रेयी सुबालक्षुरि मन्त्रिका ।। ३ ।।
सर्वसारं निरालम्बं रहस्यं वज्रसूचिकम् । तेजोनादध्यानविद्यायोगतत्त्वात्मबोधकम् ।। ४ ।।
परिव्राड्त्रिशिखीसीताचूडानिर्वाणमण्डलम् । दक्षिणा शरभं स्कन्दं महानारायणाद्वयम् ।। ५ ।।
रहस्यं रामतपनं वासुदेवश्चमुद्गलम् । शाण्डिल्यं पैङ्गलं भिक्षुं महच्छारीरकं शिखा ।। ६ ।।
तुर्यातीतश्च संन्यासं परिव्राजश्चमालिका । अव्यक्तैकाक्षरंपूर्णासूर्याक्ष्यध्यात्मकुण्डिका ।। ७ ।।

(टि०) ऋचं येन पठ्यत इति आर्षोऽयं प्रयोगः ।।

सावित्र्यात्मापाशुपतं परं ब्रह्मावधूतकम्। त्रिपुरातपनं देवी त्रिपुराकठभावना ॥ ८ ॥

हृदयं कुण्डलीभस्म रुद्राक्षगणदर्शनम् तारसारमहावाक्यपञ्चब्रह्माग्निहोत्रकम् ॥ ९ ॥

गोपालतपनं कृष्णं याज्ञवल्क्यं वराहकम्। शाट्यायनीहयग्रीवं दत्तात्रेयश्च गारुडम् ॥ १० ॥

कलिजाबालि सौभाग्यरहस्यं ऋचमुक्तिकेति ॥
ईशाद्यष्टोत्तरशतोपनिषदां शाखाभेदं दर्शयति तत्रदशोपनिषद ऋग्वेदगताः, शुक्लकृष्णाभेदेन यजुष एकपञ्चाशत, तत्र शुक्लयजुष एकोनविंशतिः, कृष्णयजुषो द्वात्रिंशत, साम्नः षोड़श, अथर्वणस्यैकत्रिंशत, आहत्याष्टोत्तरशतम्। ईशाद्यष्टोत्तरशतोपनिषदां पूर्वाचार्यप्रकाशितत्वं दर्शयति तत्र गौडपादाचार्यैर्माण्डूक्योपनिषद्याख्याता श्रीमच्छङ्करभगवत्पादाचार्यैर्दशोपनिषदः। पञ्चरुद्रनृसिंहतापिनी च शङ्करानन्दैः ॥ सदाशिवब्रह्मेन्द्रैः स्वयं प्रकाशानन्दाद्यैश्च द्वात्रिंशोपनिषदः॥ विद्यारण्याचार्यैरष्टोत्तरशतोपनिषदोव्याख्याताः ॥ महावाक्यरत्नावल्याख्यायिकायाः त्रयोदशधा विभागं दर्शयति। प्रकृतेतु रामचन्द्रेणोपदिष्टे रामदूताय धीमते।ईशाद्यष्टोत्तरशतोपनिषद्यादसां पतौ॥ निमज्यात्र महावाक्यरत्नावलिरुदाहृता। विभाव्यते विभागेन सा त्रयोदशधा पुनः। तत्रादौ विधिवाक्यानि बन्धमोक्षपराणि च, अविद्यद्धेयवाक्यानि जगन्मिथ्यापराणि च, तथोपदेशवाक्यानि जीवेशैक्यपराणि च। ब्रह्मविन्मननाख्यानि जीवन्मुक्तिपराणि च। ब्रह्मानुभूतिरूपाणि तत्समाधिपराणि च। अष्टस्वरूपवा-

क्यानि फलवाक्यान्यनन्तरम् । विदेहमुक्तिवाक्यानि लिख्यन्तेऽन्विष्य तत्क्रमात् ॥

( टीका ) महावाक्यरत्नावल्यास्त्रयोदशधा विभागं दर्शयति रामचन्द्रेणेति अविद्वान् हेयोयैर्वाक्यैस्तानि अविद्धेयवाक्यानि ॥

यः स्वाश्रमाचाररतः परिव्राड् विजितेन्द्रियः । सोऽधिकारीमहावाक्यरत्नावल्यां न चापरः ॥

( टीका ) महावाक्यरत्नावल्यायथोक्ताधिकारिणं दर्शयति य इति तुरीयातीतावधूतयोर्महावाक्योपदेशाधिकारः परमहंसस्यापीतिश्रुतेः ॥

वाग्पूर्णसहनाप्यायं भद्रं कर्णेभिरेव च । पञ्चशान्तीः पठित्वादौ पठेद्वाक्यान्यनन्तरम् ॥

( टीका ) महावाक्यरत्नावल्या ईशाद्यष्टोत्तरशतोपनिषत् सिद्धान्तसंग्रहवाक्यत्वात् तत्रत्यपञ्चशान्तिरेवात्रवक्तव्येत्याह वागिति ॥

वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्मएधि वेदस्य म आणीस्थः श्रुतं मे माप्रहासीरनेनाधीतेनाहोरात्रान् संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारम् ॥ ओं शान्तिः ३ ॥ १ ॥

( टीका ) पञ्चशान्तिं तदर्थञ्च प्रकटयति वागित्यादिना ।

---

(टि.)तुरीयातीतावधूतयोरिति, तुरीयातीतश्चावधूतश्च तुरीयातीतावधुतौ तयोः, जीवदशायां प्रथमं जाग्रत् द्वितीयं स्वप्नं, तृतीयं सुषुप्तं चतुर्थं तुरीयं चतुर्भिर्विरहितं तुरीयातीतमिति यतिधर्मनिर्णयोक्तेरवस्थाविशेषसम्पन्नोयोगी तुरीयातीतः । अवधूतश्च शून्यागारे समरसपूतस्तिष्ठन्नेकः सुखमवधूतः । चरति हि नग्नस्त्यक्त्वा गर्वं विन्दति केवलमात्मनि सर्वमित्याद्यवधूतगीतोक्तलक्षणः ।

समाहितदशायां मे मम वागिन्द्रियप्रवृत्तिर्मनसि प्रतिष्ठिता यच्छेद्वाङ्मनसीप्राज्ञ इति श्रुतेः। व्यावहारिकदशायान्तु मे मम मनोऽन्तःकरणं वाचि वागादिकरणसमूहे प्रतिष्ठितं वागादिव्यापृतेरन्तःकरणाधीनत्वात्॥ अन्यत्र मना अभूवं नादर्शमित्यादिश्रुतेः। मे मम-वाचि मनसि च हेवृहत्यात्मकप्राण! त्वं एधि प्रकाशरूपेण सदा सन्निधिंकुरु। आविःशब्देन स्वप्रकाशं ब्रह्मोच्यते प्रज्ञानशब्देन व्यवहृतत्वात् तस्याविर्भूतरूपत्त्वमतो हे आविः हे आविर्भूत मे मम मनसि अखण्डाकारवृत्तिरूपे आविः स्वातिरिक्तानात्मतिमिरग्रासादात्ममात्रज्योतिःस्वरूपेणैधि स्वातिरिक्तानात्मविस्मरणपूर्वकं सन्निधिं कुरु।

हेवाङ्मनसे! मे मदर्थं वेदस्य यथोक्ततत्त्वविद्याप्रतिपादकस्य ग्रन्थस्य आणीस्थः आनयनसमर्थे भवतम्। मे मया देशिकमुखतः श्रुतमधीतं कदापि मा प्रहासीः उपदेष्टृमुखादवगतार्थं जातस्य विस्मरणं माकार्षीरित्यर्थः॥ अनेन मयाधीतेन परापरविद्याजातेन अहोरात्रान् अहोरात्रं सदा त्वां संदधामि अपररूपेण पररूपेण वा त्वमहमस्मीति अनुसंधानं करोमीत्यर्थः। हे प्राज्ञात्मन् यथा शास्त्रकर्त्तव्यमृतं व्यावहारिकसत्यं वावदिष्यामि। वागादिकरणग्रामतो यथावद्ग्राह्यं सत्यं तद्गतहेयांशापाये पारमार्थिकसत्यस्वरूपं वा त्वां वदिष्यामि। तत्परमपरं वा ब्रह्म परापरविद्यासंयोजनेन विद्यार्थिनं मामवतु। तदेव पुनः परमपरं वा ब्रह्म मद्विद्यावक्तारमाचार्यमवतु अवतुमामवतु वक्तारमिति पुनर्वचनमादरार्थं परापरविद्याप्राप्त्यन्तरायीभूताध्यात्मिकादितापत्रयनिरसनाय शान्तिरिति वचनत्रयम्। इत्थं शान्तिर्विद्याप्रारम्भावसानयोः कार्याकृतायामस्यां विद्याप्रसीदतीति सिद्धम् विद्याप्रादुर्भावसमकालमेव विद्वान् कृतार्थोभवतीत्यर्थः॥ १॥

ओं पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ २ ॥

( टीका ) पूर्णमद इति, यद्देशतः कालतोवस्तुतः परिच्छेदविरलं तत्पूर्णं यत् अद इति परोक्षाभिधायि सर्वनाम तदपि पूर्णं निरुपाधिकत्वात् । यदिदं शब्दवाच्यं व्यवहारापन्नं तदपि पूर्णं शबलात्मनाव्याप्तत्वात् यददःशब्दवाच्यं कारणभावमापन्नं पूर्णं ब्रह्म तदेव हीदंशब्दवाच्यं कार्योपाध्यवच्छिन्नमिव भाति । वस्तुतः कार्यकारणकलनाविरलमित्यर्थः । यदेवेह तदमुत्रेति श्रुतेः । इदंशब्दगोचरद्वैतप्रपञ्चारोपाधिकरणत्वेन पूर्णात् तत्प्रपञ्चापवादाधिकरणतया पूर्णं ब्रह्मोदच्यते उद्रिच्यते अतिरिच्यत इत्यर्थः । एवं कार्यकारणात्मना पूर्णस्य वस्तुनः व्यष्टि समष्टि स्वाविद्योपाधिसापेक्ष्यकार्यकारणकलनाविरलमहं ब्रह्मास्मीति तथाविधं पूर्णमादाय विदित्वा तद्वेदनसमकालं स्वातिरिक्तकार्य कारणकलनास्तिनास्तीतिविभ्रमापन्हव इति सिद्धं निष्प्रतियोगिकं पूर्णमेव ब्रह्म स्वमात्रमवशिष्यते ॥ ओं शान्तिः शान्तिः शान्तिरिति उक्तार्थम् ॥ २ ॥

ओं सह नाववतु सह नौ भुनक्तु सहवीर्यं करवावहै ।
तेजस्विनावधीतमस्तु माविद्विषावहै ॥ ॐ शान्तिः ३॥३॥

( टीका ) सहनाविति औपनिषदं ब्रह्म नौ शिष्याचार्यौ सहैवावतु सह नौ विद्याफलं भुनक्तु पालयतु सह विद्यानिमित्तं

( टिप्पणी ) शबलात्मनेति नानास्वरूपेणेत्यर्थः । कार्यकारणकलनेति कार्यकारणसम्बन्धविरलमित्यर्थः । तत्प्रपञ्चेति इदंशब्दगोचरद्वैतप्रपञ्चेत्यर्थः । स्वातिरिक्तेति पूर्णब्रह्मस्वरूपज्ञानकाले कार्यकारणसम्बन्धोऽस्तिनास्तिवेतिभ्रान्तेरपगमोभवतीति सर्वथा निर्विशेषस्य पूर्णस्यैव स्वस्वरूपस्य ब्रह्मणोऽवशेष इति तात्पर्यम् ॥ २ ॥

वीर्यं सामर्थ्यं करवावहै सम्पादयावहै। नौ आवयोरधीतं ग्रन्थजातं तेजस्वि ब्रह्म याथात्म्यज्ञानयोग्यमस्तु। तत्राध्ययने यदि प्रमादात्कश्चिद्विद्वेषो भवेत्तदा स माभूदिति तत्क्षमापनायेयमाशीःप्रार्थना। माविद्विषावहै मैव परस्परं विद्वेषं जनयावहै शान्तिरित्युक्तार्थम्॥ ३॥

ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथोबलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मामाब्रह्मनिराकरोदनिराकरणमस्त्वनिराकरणं मे अस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्तेमयि सन्तु ओं शान्तिः ३॥ ४॥

(टीका) व्यष्टि समष्टिप्रपञ्चारोपापवादाधारविराड् हिरण्यगर्भेश्वरतुर्याः मुमुक्षोः ममाङ्गानि करचरणादीनि स्वध्यानानुकूलतया आप्यायन्तु चिन्मुद्रासिद्धासनादिव्याप्तानि कुर्वन्तु। तत्प्रसादादितोमदीयवाक् प्राणश्चक्षुःश्रोत्रमित्युपलक्षितकर्मज्ञानेन्द्रियाणि प्राणपञ्चकमपि पराक्प्रवृत्ति विहाय प्रत्यक्प्रवणतया अथो यथाबलं सर्ववेदान्तश्रवणमनननिदिध्यासनपर्यवसन्नानि भवन्तु। यदीशाद्यष्टोत्तरशतोपनिषत् प्रतिपाद्यं तदौपनिषदं ब्रह्मैव सर्वम्। सर्वं खल्विदं ब्रह्मेति श्रुतेः। ब्रह्मातिरिक्तारितत्त्वधिया अहं ब्रह्म मा निराकुर्याम् ब्रह्मैवास्मीत्यनुसन्धानं कुर्यामित्यर्थः। ब्रह्मापि प्रत्यग्भावमापन्नं मा मा निराकरोत् आवयोरहं ब्रह्मास्मि ब्रह्मैवाहमस्मीत्यनिराकरणमस्त्वनिराकरणं मेऽस्तु। अतदनात्मापन्हवसिद्धे तदात्मनि निरते तद्भावमापन्ने मयि ये उपनिषत्सु प्रकाशिता-

(टि०) विराडिति, चतुर्विधस्थूलशरीर समष्ट्युपहितचैतन्यं वैश्वानरो-विराडिति च वेदान्तसारे। हिरण्यगर्भः सूत्रात्मा ईश्वरोमायोपहितचैतन्यम्। तुर्यस्त्वनुपहितचैतन्यम्। चिन्मुद्रेति, चिन्मुद्रा योगशास्त्रोक्ता सिद्धासनं

धर्माः शमादयस्त्यक्तकामादायः सच्चिदानन्दादयश्च विद्यन्ते त एव मयि सन्तु ! आवृत्तिरादरार्था ॥ शान्तिरित्युक्तार्थम् ॥ ४ ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैः स्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ ५ ।

( टीका ) भद्रमिति हेविराडादयोदेवाः । मुमुक्षवो वयं भवत्प्रसादतः मुमुक्षूणां बहुत्वात् बहुवचनम् कर्णेभिरिति छान्दसम् कर्णैः भद्रं निर्विशेषतुर्यब्रह्मप्रतिपादकवेदान्तजातं शृणुयाम संशयादिपञ्चदोषशान्त्यवधिवेदान्तश्रवणं कुर्म इत्यर्थः । केवलं श्रवणतः किं स्यादित्यत आह भद्रमिति यथाशास्त्रं ब्रह्मविद्याश्रवणातोयजत्रा ध्यानयज्ञयजनशीला वयं अक्षभिः मत्यग्भावापन्नकरणैः भद्रं वैराज्यादिसाकल्यं नैष्कल्यं तुरीयं तुरीयातीतं वा पश्येम पश्यामः । अल्पायुषां कथं तत्सिद्धिरित्याह स्थिरैरिति तत्तदङ्गाभिमानीन्द्राधिदेवताप्रसादतः स्वस्वविषयव्यापृतिशून्यैः तनूभिः सूक्ष्मवस्तुगोचरैः अङ्गैर्विशिष्टा वयं तुष्टुवांसः युष्मदीयां स्तुतिं कृतवन्तः देवहितं देवेन प्रजापतिना हितं समर्पितं यन्नैरुज्यादिगुणविशिष्टमायुश्चिरजीवित्वं तद्व्यशेम विशेषेण प्राप्नवाम तस्मादपमृत्योरभावात् चिरं भद्रं शृणुमाम इति पूर्वत्रान्वयः ॥५॥

तत्रैवोक्तम् आदिशब्देन स्वस्तिकपद्मासने बोध्ये । एषामासनादीनां प्राणायामे आनुकूल्यात् । मा मा निराकरोदिति ब्रह्म मा मां मानिराकरोत् स्वस्मान्न वियोजयतु संसारे मापातयत्विति यावत् । अनिराकरणमिति आवयोः शिष्याचार्ययोः ब्रह्मविषयिणीप्रीतिरेवास्तु । अतदनात्मेति अतन्निरसनमुखेनाखिलजडप्रपञ्चापनोदनसिद्ध ।

( टि० ) संशयादीति संशयभ्रमप्रमादप्रतारणाकरणापाटवानीति पञ्च दोषाः । वैराज्यादीति वैराज्यादिसाकल्यं तुरीयं नैष्कल्यं तुरीयातीतमित्यन्वयः वैराज्यादयस्तु राजाधिराजायप्रसह्यसाहिने इति ऋग्वेदीयमन्त्रघटका गृह्यन्ते ।

स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः
स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनोवृहस्पतिर्दधातु।६॥

(टीका) मन्दबुद्ध्यनुकम्पया प्रकारान्तरेण पुनः प्रार्थ्यते स्वस्तीति इन्द्रस्त्रिलोकीपतिः वृद्धश्रवाः वृद्धैर्महात्मभिः सदा पुराणादिषु श्रूयते इति वृद्धश्रवाः . तादृश इन्द्रो नोऽस्माकं स्वस्ति दधातु ब्रह्मज्ञानार्थं क्षेमं सम्पादयतु। विश्ववेदाः सर्वज्ञः पूषा सूर्यः नोऽस्माकं स्वस्ति दधातु। ब्रह्ममात्रध्यानानुकूलं मनोभवत्वित्यनुगृह्णातु। अरिष्टा अकुण्ठिता नेमिर्गतिर्यस्य सोऽयमरिष्टनेमिः तार्क्ष्यः गरुडः. नोऽस्माकं मनो ब्रह्मैकतानं स्वस्तिस्यादित्यनुगृह्णातु। वृहस्पतिः सुराचार्योनोऽस्माकं करणजालं ब्रह्ममात्रपर्यवसानं दधातु करोत्वित्यर्थः। ॐ शान्तिः ३ ॥ ६ ॥

. तत्र सार्द्धान्तिकविधिवाक्यानि।

ॐ सर्वं खल्विदं ब्रह्म तज्जलानीतिशान्त उपासीत॥१॥

(टीका) एवं पञ्च शान्तीः कृत्वा गुरुनमस्कारपूर्वकं विध्यादिमहावाक्यजातं पठेदित्याह तत्रेति अर्द्धान्तिकं किमित्यत्र संहिताकाले ऋग्विरामाणामवसानमिति संज्ञा तेषामवसानानां क्रमकाले सन्ध्यभावादर्द्धान्तिकमिति संज्ञेति वेदलक्षणेऽभिहितम् विधिविचारस्तु लोचने द्रष्टव्यः। अविधेयब्रह्मप्रापकविधिच्छायापन्नवाक्यानि कानीत्यत आह सर्वमित्यादिना। स्वाज्ञानकल्पितव्यक्तप्रपञ्चजातमिदं शब्दगोचरं सर्वं ब्रह्मैव खलु। कार्यकारणयोरेकत्वाभिप्रायेण सर्वप्रपञ्चस्य ब्रह्मत्वं युज्यते। कुतः। प्रपञ्च-

(टिप्पणी) तत्रसार्द्धान्तिकेति अर्द्धान्तिकेन सहितानि सार्द्धान्तिकानि सार्द्धान्तिकानि च तानि विधिवाक्यानीति समासः अर्द्धान्तिकत्वञ्च क्रमकालिकविच्छेदत्वम् तच्च एष्वेव विधिवाक्येषु न स्वर्गकामोज्योतिष्टोमेन यजेत-

जातस्य तज्जत्वात्तत्स्थत्वात् तल्लत्वादिति तज्जलानीति कार्यकारणाकलनाशान्तःसन्निष्प्रतियोगिकं ब्रह्म स्वमात्रमित्युपासीत सदानुसन्धानं कुर्यादित्यर्थः ॥ १ ॥

आत्मानमेवावेदहं ब्रह्मास्मीति ॥ २ ॥

( टीका ) मुमुक्षुर्गुरुमुखतः पराक्प्रपञ्चग्रासप्रत्यञ्चमात्मानमेवाहं ब्रह्मास्मीत्यावेदितवान् प्रत्यगभिन्नं ब्रह्मास्मीति स्वात्मानं ज्ञातवान् इत्यर्थः ॥ २ ॥

आत्मावा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ॥ ३ ॥

( टीका ) अरे मैत्रेयि अनात्मापन्हवसिद्धः परमात्मैव स्वमिति द्रष्टव्यः । तदुपायत्वेन सर्ववेदान्तार्थः श्रोतव्यः । युक्तिभिर्मन्तव्यः प्रत्यग्भावमापन्नबुद्ध्या ब्रह्मैवाहमिति निदिध्यासितव्यः । स्वात्मदर्शनमुद्दिश्य वेदान्तश्रवणमनननिदिध्यासनं कर्त्तव्यमित्यर्थः॥

महत्पदं ज्ञात्वा वृक्षमूले वसेत् ॥ ४ ॥

( टीका ) महद्भिर्ब्रह्मविद्वरिष्ठैः पद्यते ज्ञायते इति महत्पदं ब्रह्मस्वमात्रमिति ज्ञात्वा वृक्षमूले संसारवृक्षमूले ब्रह्मणि स्वे महिम्नि वा वसेत् स्वावशेषधियाऽवतिष्ठेतेत्यर्थः ॥ ४ ॥

सच्चिदानन्दात्मानमद्वितीयं ब्रह्म भावयेत् ॥ ५ ॥

( टीका ) अनृतजडदुःखात्मकप्रपञ्चापन्हवसिद्धात्मानमद्वितीयं प्रत्यगभिन्नं ब्रह्मास्मीति भावयेत् ॥ ५ ॥

---

तस्मिन् विभिवाक्ये इति घनान्तपाठिभिर्व्युत्पन्नैर्वैदिकैरवगन्तव्यम् । तज्जलानीति निखिलप्रपञ्चस्य ब्रह्मणः सकाशाज्जातत्वात् तस्मिन्नेव च लीनत्वात् स्थितेरुपादानन्तु बहुवचननिर्देशादर्थात्प्राप्तेश्चेतिभावः ॥ १ ॥

अहं ब्रह्मास्मीत्यनुसन्धानं कुर्यात् ॥ ६ ॥

(टीका) देहोहं जीवोवाहमिति परिच्छिन्नभावनां विहाय सदाहं प्रत्यगेव परब्रह्मास्मीत्यनुसन्धानं कुर्यात् । नपुनर्देहाद्यात्मभावमियादित्यर्थः ॥ ६ ॥

सतज्ज्ञोबालोन्मत्तपिशाचवज्जडवृत्यालोकमाचरेत् ॥७॥

(टीका) यस्तत्पदलक्ष्यं ब्रह्म स्वमात्रमिति जानाति सतज्ज्ञोब्रह्मविद्वरोविद्वान् स्वलक्ष्यैकतानचित्तबालवत् उन्मत्तवत् पिशाचवच्च स्वलक्ष्येतरद्विस्मृत्य यथा लोका जडोयमिति मन्येरंस्तथा जडवृत्या लोकमाचरेत् । स्वशीलप्रकटनं न कुर्यादित्यर्थः ॥ ७ ॥

ब्राह्मणः समाहितोभूत्वा तत्वं पदैक्यमेव सदा कुर्यात् ।८।

(टीका) गुरुमुखतोवेदान्तार्थोब्रह्मेति जानातीति ब्राह्मणो ब्रह्मवित् पराक्प्रवृत्तिनिरसनपूर्वकं प्रतीच्येवसमाहितकरणग्रामोभूत्वा तत्पदवाच्यसर्वज्ञत्वकिञ्चिज्ज्ञत्वादिकं त्यक्त्वा तत्वं पदलक्ष्यब्रह्मप्रतीच्योर्ब्रह्माहमस्मीत्यैक्यानुसन्धानमेव सदा कुर्यात् कदापि परावरभेदबुद्धिं न कुर्यादित्यर्थः ॥ ८ ॥

सर्वत्राद्वैतब्रह्मबुद्धिं कुर्यात् ॥ ९ ॥

(टीका) स्वाज्ञदृष्ट्या द्वैतप्रपञ्चे सत्यपि ब्रह्मातिरिक्तं न किञ्चिदस्तीत्यनुभवबलेन सर्वत्राद्वैतब्रह्मैव विद्यते इति ब्रह्मबुद्धिं कुर्यात् कदाप्यब्रह्मबुद्धिं न कुर्यादित्यर्थः ॥ ९ ॥

आशाम्बरो न नमस्कारो न स्वाहाकारो न निन्दास्तुतिर्यादृच्छिकोभवेत् ॥ १० ॥

---

(टिप्पणी) पराक्प्रवृत्तिनिरसनेति बाह्यप्रवृत्तिं विहायेतिभावः । प्रतीच्येवेति आत्मन्येवेत्यर्थः । ब्रह्मप्रतीच्य इति ब्रह्मज्ञानेच्छुः ॥ ८ ॥

( टीका ) ब्रह्मविद्वरीयान् निर्विशेषब्रह्मस्वमात्रमिति ज्ञात्वा मानावमानास्पददेहादावात्मीयाभिमत्यभावाद्दिगम्बरो भूत्वा ज्येष्ठकनिष्ठफललाभाभावाद् न नमस्कारः स्वाहास्वधावषट्कार गोचरकर्मसामान्यस्य संन्यस्तत्वात् न स्वाहाकारो न स्वधाकारः दुश्चरित्रसच्चरित्राभावात् न निन्दास्तुतिविषयो भवति प्रवृत्तिनिवृत्तिव्यावृत्तिवैरल्यपूर्वकं यादृच्छिको भवेत् स्वेच्छाचारोभवेदित्यर्थः ॥ १० ॥

**सर्वतः स्वरूपमेव पश्यन् जीवन्मुक्तिमवाप्य प्रारब्धप्रतिभासनाशपर्यन्तं स्वरूपानुसन्धानेन वसेत्॥११॥**

( टीका ) ब्रह्मविद्वरोमुनिः स्वाज्ञदृष्ट्या प्रपञ्चमसत्त्वावपि सर्वतोविभातनामरूपापवादाधिकरणं ब्रह्मैवास्मीति स्वस्वरूपमेव पश्यन् स्वरूपचित्तलयलक्षणजीवन्मुक्तिं प्राप्य परदृष्टिसमर्पितप्रारब्धभासनाशपर्यन्तं मद्व्यतिरिक्तमणुमात्रं न विद्यते इति श्रुत्यनुरोधेन स्वस्वरूपानुसन्धानेन कालं नयेदित्यर्थः ॥ ११ ॥

**स्वरूपानुसन्धानं विनान्यथाचार परो न भवेत् ॥१२॥**

( टीका ) पूर्वोत्तरवाक्ययोः पौनरुक्त्यमिति चेन्न प्रतिवाक्यानां भिन्नोपनिषत्पठितत्वात्सर्वत्र न पुनरुक्तिः । ब्रह्मविद्वरः कदाचिदपि स्वरूपानुसन्धानं विनान्यथाचारपरो न भवेत् स्वमात्रस्मृतिं विना स्वातिरिक्तं न स्मरेदित्यर्थः ॥ १२ ॥

**वेदान्तश्रवणं कुर्वन् योगं समारभेत् ॥ १३ ॥**

( टीका ) सर्ववेदान्तश्रवणमननतः स्वस्वरूपं निश्चित्य सर्वापह्नवसिद्धब्रह्मस्वमात्रमित्यस्पर्शयोगं समारभेद् निर्विकल्पकसमाधिं कुर्यादित्यर्थः ॥ १३ ॥

---

( टिप्पणी ) स्वरूपचित्तलयेति स्वसमाधिकरणकचित्तलयः ।

आकुञ्चनेन कुण्डलिन्याकपाटमुद्घाट्य मोक्षद्वारं विभेदयेत् ॥ १४ ॥

( टीका ) अपानाकुञ्चनेनाभिवर्द्धित प्राणाग्निसन्तप्तकुण्डलिनीशक्त्या ग्रन्थित्रयान्वित सुषुम्णा कवाटमुद्घाट्य तद्गतमोक्षद्वारं कैवल्यनाडिकां विभेदयेत् तद्गतचिदाकाशपर्यवसन्नो भवेदित्यर्थः १४॥

यच्छेद्वाङ्मनसि प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ॥१५॥

( टीका ) वाक्श्रोत्रादिदशेन्द्रियाणि स्वार्थग्रहणपूर्वकं सङ्कल्पादिमन्मनसि नियच्छेत् मनोमात्रतया विलापयेत् ॥ १५ ॥

ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १६ ॥

( टीका ) निःसङ्कल्पोपायतस्तन्मनो ज्ञानात्मनि निश्चयात्मकबुद्धौ नियच्छेद् बुद्ध्यात्मकज्ञानं ब्रह्माहमस्मीत्यखण्डाकारवृत्त्युपायतो महत्यात्मन्यव्यक्ते नियच्छेत् तच्च निर्विकल्पाख्यमहत्तत्त्वात्मानं ब्रह्मभावं असन्नद्दीति श्रुतिसिद्धोपायतः स्वातिरिक्तशान्तनिष्प्रतियोगिकपरमात्मनि नियच्छेत् परमात्मावशेषणामापादयेदित्यर्थः ॥ १६ ॥

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ॥ १७ ॥

( टीका ) क्षराक्षरभावविरलः पुरुष एव पूरुषः ॥ १७ ॥

किमिच्छन् कस्य कामाय शरीरमनु सञ्चरेत् ॥१८॥

( टीका ) परमात्मायमहमस्मीति प्रत्यञ्चमात्मानं विजानीयाच्चेद्यदि तदा स्वस्याप्तकामत्वेन कस्य कामाय किमिच्छन् शरीरमनुसञ्चरेत् कृच्छ्रचान्द्रायणादिना शोषयेत् घृतसूपादिना किमर्थं पोषयेत् देहेन्द्रियादिनिर्वर्त्यज्ञानफलस्यासादितत्वादित्यर्थः॥

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥ १९ ॥

नानुध्यायाद्बहूञ्छब्दान्वाचोविग्लापनं हि तत्॥२०॥

(टीका) ब्राह्मणो ब्रह्मविद्वरः धीरोविद्वान् यः सर्वापन्हवतः संसिद्धोभवति तमेव परमात्मानं स्वमात्रमिति विज्ञाय तत्रैव प्रज्ञां निष्ठां कुर्वीत तन्निष्ठातिरेकेण पराग्वस्तुगोचरान् बहूञ्छब्दाननुध्यायान्नोचरेत्। तदुच्चारणतः किंभवेदित्यत आह वाच इति वाचोविग्लापनं कण्ठशोषणकरमित्यर्थः॥ १९॥ २०॥

यतोनिर्विषयस्यास्य मनसोमुक्तिरिष्यते॥ २१॥

(टीका) यतोनिर्विषयस्य संकल्पादिवृत्तिविरलस्य मनसः ब्रह्ममात्रावशेषलक्षणा मुक्तिरिष्यते॥ २१॥

अतोनिर्विषयं नित्यं मनः कार्यं मुमुक्षुणा॥२२॥

(टीका) अतो मुमुक्षुणा नित्यं स्वमनोनिर्विषयं निःसङ्कल्पं कार्यम् ब्रह्मातिरिक्तमनस्तत्कार्यंनास्तीति भावनीयम्॥ २२॥

चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत्॥ २३॥

(टीका) अचिद्रूपं चित्तमेव जनिमृत्युरूपसंसृतिहेतुः हि शब्दोनिश्चयार्थः। ब्रह्मातिरिक्तचित्ततत्कार्यं नास्तीति शोधयेत्। निष्प्रतियोगिकब्रह्ममात्रमेव भावयेदित्यर्थः॥ २३॥

दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत्॥ २४॥

(टीका) स्वातिरेकेण यद्दृश्यते तद्दृश्यमनन्तकोटिब्रह्माण्डजातं ब्रह्मातिरिक्तं नास्तीति ब्रह्माकारेणादृश्यतां नीत्वा ब्रह्ममात्रं चिन्तयेदित्यर्थः॥ २४॥

मायाकार्यमिदं भेदमस्तिचेद्ब्रह्मभावनम्॥ २५॥

(टीका) कालत्रयेऽपि स्वातिरेकेण या माया सा माया तत्कार्याणि अनन्तकोटिब्रह्माण्डानि तद्भेदोऽयमस्ति चेत्तदा तत्सर्वं ब्रह्मेति ब्रह्मभावनं कर्त्तव्यम्॥ २५॥

देहोऽहमिति दुःखं चेद्ब्रह्माहमिति निश्चयः ॥ २६ ॥

( टीका ) मायातत्कार्याभावे ब्रह्मभावनापि न कर्त्तव्या स्वातिरेकेण देहोस्मीतिवृत्तिर्दुःखरूपा चेत्तां विहाय ब्रह्माहमिति निश्चयः कार्यः ॥ २६ ॥

हृदयग्रन्थिरस्तिचेच्छेदयेद्ब्रह्मचक्रकम् ॥ २७ ॥

( टीका ) हृदित्यहङ्कारोऽयमिति साक्षी तयोस्तप्तायःपिण्डवत्तादात्म्यं हृदयग्रन्थिरस्तिचेद् ब्रह्मचक्रमादाय तच्छेदनं कुर्यात् ॥ २७ ॥

संशये समनुप्राप्ते ब्रह्मनिश्चयमाप्नुयात् ॥ २८ ॥

( टीका ) अहं ब्रह्म न वेति संशये समुदिते ब्रह्माहमस्मीति निश्चयमाप्नुयात् ॥ २८ ॥

विज्ञेयोऽक्षरतन्मात्रं जीवितश्चापि चञ्चलम् ॥२९॥

( टीका ) चतुर्वेदपद्शास्त्रादिकमभ्यस्याथब्रह्मविचारः कर्त्तव्य इत्याकाङ्क्षायां जीवितस्यातिचञ्चलत्वेन क्षणभङ्गुरत्वात् क्षराप्रपञ्चाप्रपह्नव इति सिद्धाक्षरतन्मात्रं विज्ञेयमिति पर्यवसितोर्थः ॥ २९ ॥

विहाय शास्त्रजालानि यत्सत्यं तदुपास्यताम् ॥३०॥

( टीका ) यत एवमतः सर्वशास्त्राभ्यासं विहाय यदसत्प्रपञ्चापह्नवसिद्धं सन्मात्रं तदेव स्वमात्रमित्युपास्यताम् तन्मात्रतया तिष्ठेदित्यर्थः ॥ ३० ॥

यस्य स्त्री तस्य भोगेच्छा निस्त्रीकस्य क्व भोगभूः॥३१॥
स्त्रियं त्यक्त्वा जगत्यक्तं जगत्यक्त्वा सुखी भवेत्॥३२॥

( टीका ) स्पष्टार्थः ॥ ३१ ॥

स्त्री सापेक्षभोगाशां विपाकटुवत्त्यक्त्वा तत्कलनाकलित-

जगद्विमुखोभूत्वा तदसम्भवप्रबोधसिद्धं ब्रह्मसुखं स्वमात्रमिति भजेदित्यर्थः ॥ ३२ ॥

चित्तं कारणमर्थानां तस्मिन् सति जगत्त्रयम् ॥ ३३ ॥

( टीका ) जगत्त्रयोपलक्षितकार्याऽविद्यावस्तुनश्चित्तविकल्पितत्वेन मिथ्यात्वात्तत्कल्पकचित्तं स्वातिरिक्तं नेतिज्ञानात्तत्कार्यं जगदपि विलीयते ततः यत्प्रयत्नतश्चित्तमात्रमपन्होतव्यं तदपन्हवसिद्धं ब्रह्मस्वमात्रमिति चिन्तयेदित्यर्थः ॥ ३३ ॥

तस्मिन् क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ३४

सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम् ॥ ३५ ॥

( टीका ) स्पष्टार्थः ॥ ३४ ॥ सुप्तेरुत्थाय पुनः सुप्त्यन्तमेवमामृतेश्चानेकप्रपञ्चापन्हवसिद्धं निष्प्रतियोगिकैकब्रह्मैव स्वमात्रमिति प्रविचिन्त्यतामित्यर्थः ॥ ३५ ॥

गच्छँस्तिष्ठन्नुपविशञ्छयानो वान्यथाऽपि वा ॥ ३६ ॥

यथेच्छया वसेद्विद्वानात्मारामः सदा मुनिः ॥ ३७ ॥

( टीका ) स्पष्टार्थः ॥ ३६ ॥ अनात्मकलनाविरलपरमात्मन्येव सदा रमत इत्यात्मारामो मुनिर्ब्रह्मविद्वरीयान् गमनागमनशयनादावपि यथेच्छया ब्रह्मैवास्मीति स्वच्छन्देन वसेत् ॥ ३७ ॥

ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः ३८ ॥

( टीका ) ब्रह्मभावाय यतत इति यतिः मुमुक्षुर्भ्रुवोर्मध्ये नित्यं प्रत्यगभिन्नं ब्रह्म ज्योतिर्लिङ्गं स्वाभेदेन सदा ध्यायेत् ॥ ३८ ॥

आत्मानमात्मना साक्षाद्ब्रह्म बुद्ध्वा सुनिश्चलम् ३९

( टीका ) जातिवर्णाश्रमोचितसत्कर्मानुष्ठाता मुनिः गुरुमुखाच्छ्रुत वेदशास्त्रपुराणार्थसंस्कृतात्मना मनसा पराक् प्रपञ्चा-

वभासक प्रत्यगात्मानं साक्षात् मुनिश्चलं निर्विशेषं ब्रह्म स्वमात्रमिति बुद्धा ततः प्रयोजनाभावाद्देहजातिवर्णाश्रमविभ्रमकलितवेद शास्त्रपुराणादिकमपि पदपांसुमिव त्यजेत्। तन्निर्वर्त्य फलस्य सिद्धत्वादित्यर्थः ॥ ३९ ॥

देहजात्यादिसम्बन्धान् वर्णाश्रमसमन्वितान् ॥४०॥
वेदशास्त्र पुराणादि पदपांसुमिव त्यजेत् ॥ ४१ ॥
एकाकी निस्पृहस्तिष्ठेन्नहि केन सहालपते ॥४२॥

(टीका) स्पष्टार्थः ॥ ४० ॥ ४१ ॥ यतिः सर्वत्र निस्पृहः सन् रहस्येकाकी तिष्ठेत् कदाचिज्जनप्रसक्तावपि तत्सङ्गभिया नहि केन सहालपेत्। व्यवहारप्रसक्तो तत्तत्कार्यानुरोधेन नारायण इत्येव सदा प्रतिवाक्यं दद्यात्। ब्रह्माहमस्मीति ध्यानतत्परो मुनिः दण्डकमण्डलुवस्त्रादिकं परित्यज्य कौपीनधारी दिगम्बरो वा भूयादित्यर्थः ॥ ४२ ॥

दद्यान्नारायणेत्येवं प्रतिवाक्यं सदा यतिः ॥ ४३ ॥
मुनिः कौपीनवासा स्यान्नग्नो वा ध्यानतत्परः॥४४॥
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः॥ ४५ ॥
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ ४६ ॥

(टीका) स्पष्टार्थः ॥ ४३ ॥४४॥ परागसापेक्षप्रत्यगात्मान मधिकृत्य तदभिन्नपरमात्मनि यो रमते सोऽयमध्यात्मरतिः स्वे महिम्न्यासीनः स्वातिरिक्तनिरपेक्षः निर्गतसङ्कल्पो निराशिषः इहास्मिन् लोके निष्प्रतियोगिकब्रह्ममात्रसुखार्थी स्वात्मनैव सहायेन एकाकी विचरेत्तिष्ठेद्वेत्यर्थः ॥ ४५ ॥ ४६ ॥

सन्दिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ॥ ४७ ॥
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥ ४८ ॥

(टीका) ब्रह्म भावापन्नोयतिर्वर्णाश्रमाचारविवर्जितः सन् सर्वभूतानामयं ब्राह्मणोवानवेत्यादि संदिग्धवेपोभूत्वा स्वातिरिक्त जातकामसंकल्पादि वृत्तिकदंबोच्चावचशब्दजालाग्रहण पूर्वक मन्धवज्जडवन्मूकवद्बधिरवच्चापि संकल्पविरलकीटवन्महींचरेद्विह रेदित्यर्थः ॥ ४७ ॥ ४८ ॥

यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ॥४९॥
यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत् ॥५०॥
लभते नासया यद्यत्तत्तदात्मेति भावयेत् ॥ ५१ ॥
जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ॥ ५२ ॥
त्वचा यद्यत्स्पृशेद्योगी तत्तदात्मेति भावयेत् ॥ ५३ ॥

(टीका) मुमुक्षुश्चक्षुश्रोत्रादिकरणजातं तद्ग्राह्यरूपशब्दादिकं तदगोचरज्ञानं च परमात्मेति भावयेत् स्वातिरेकेण सविषयचक्षुरादिकरणज्ञानं च नास्तीत्यर्थः ॥४९॥५०॥५१॥५२॥५३॥

दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ॥५४॥

(टीका) ब्रह्मातिरिक्तं न किंचिदस्तीति दृष्टिं ज्ञानमयीं सम्यग् ज्ञानरूपां कृत्वा परिदृश्यमानं जगत् ब्रह्ममयं ब्रह्ममात्रं पश्येत् भावयेदित्यर्थः ॥ ५४ ॥

द्रष्टृदर्शनदृश्यानां विरामो यत्र वा भवेत् ॥५५॥
दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकिनी ॥५६॥

(टीका) द्रष्ट्रादीनां त्रिपुटी यत्र विरूपविलयं भजते तत्रैव तद्भयाधिकरणे अधिष्ठेयसापेक्षाऽधिष्ठानताविरलनिरधिष्ठानं ब्रह्मास्मीति दृष्टिः कर्तव्या ततोनासाग्रावलोकनी दृष्टिर्नकार्येत्यर्थः ॥ ५५ ॥ ५६ ॥

देवाग्न्यगारे तरुमूले गुहायां
वसेदसंगोऽलक्षितशीलवृत्तः ॥ ५७ ॥
निरिन्धनं ज्योतिरिवोपशांतो
नचोद्विजेदुद्विजेद्यत्र कुत्र ॥ ५८ ॥

( टीका ) ब्रह्मैवाहमस्मीति ब्रह्मात्मभावारूढोमुनिः परैरलक्षितशीलवृत्तःसन् सर्वत्रासंगोभूत्वा देवालयाग्न्यगारतरुमूले गुहादौ समाधिं कुर्वन् वसेत् यत्र कुत्रापि स्वातिरिक्तप्रतीतावुद्विजेदपवदेद्वा स्वातिरिक्तमस्तीति न चोद्विजेन्नापवदेत्स्वस्य स्वातिरिक्तस्य च निष्प्रतियोगिकभावाभावज्ञानी ब्रह्ममात्रे स्वे महिम्नि निरिन्धनज्योतिरिवोपशांतोभवन्निर्व्यापारतयावतिष्ठेतेत्यर्थः ॥५७।५८॥

शान्तोदान्तउपरतस्तितिक्षुर्यो-
नूचानोऽभिजज्ञौ ब्रह्मसमानः ॥ ५९ ।
त्यक्तैषणोऽनृणस्तं विदित्वा
मौनी वसेदाश्रमे यत्र कुत्र ॥ ६० ॥

( टीका ) नियमितांतरिन्द्रियः शांतः तथा बाह्येंद्रियोदांतः स्वातिरिक्तं नेत्युपरतः शीतोष्णादिद्वंद्वसहिष्णुस्तितिक्षुः श्रद्धासमाधानाभ्यां युक्तः सत्कुलप्रसूतोऽनूचानः इत्थं भूतोयोगीब्रह्मसमानो ब्रह्मभिन्नः प्रत्यगस्मीति ज्ञानाभ्यामात्मत्वेन सर्वमभिजज्ञौ जानातिस्म एवं सर्वात्मभावारूढोमुनिर्ब्रह्मचर्ययज्ञप्रजोत्पादनऋषिदेवपितृऋणात्रोमुक्तोऽनृणः त्यक्तैषणात्रयोमौनी यः सर्वापन्हवसिद्धस्तमात्मानं विदित्वा यत्र कुत्र वाश्रमे कुटीचकबहूदकहंसपरमहंसतुर्यातीतावधूतभेदभिन्ने वसेत् तिष्ठेदित्यर्थः ॥ ५९ ॥ ६० ॥

( टि० ) अतिमन्दाधिकारी कुटीचकः, मन्दाधिकारी बहूदकः, मध्यमाधिकारी हंसः, उत्तमाधिकारी परमहंसः, इतियतिधर्मनिर्णये चतुर्णां स्वरूपमुक्तम् । तुर्यातीतावधूतयोर्लक्षणन्तु पूर्वमेवोक्तम् । तत्स्वरूपन्तु तत एवावगन्तव्यम् ॥

यमैश्च नियमैश्चैव ह्यासनैश्च सुसंयुतः ॥ ६१ ॥
नाडीशुद्धिं च कृत्वादौ प्राणायामं समाचरेत् ॥६२॥

(टीका) अहिंसासत्यास्तेयब्रह्मचर्यदयार्जवक्षमाधृतिमिताहारवाह्यांतःशौचभेदेन दशविधयमैश्च तपःसंतोपास्तिक्यश्रद्धादानेशपूजनवेदांतश्रवणह्रीमतिजपव्रतभेदेन दशविधनियमैश्च स्वस्तिकगोमुखपद्मवीरसिंहभद्रमुक्तमयूरसुखासनभेदेन नवविधासनैश्च सुसंयुतः सन् योगी आदौ पूरककुंभकरेचकान्वितशीतिप्राणायामैर्नाडीशुद्धिं च कृत्वाऽथ सर्वापन्हवसिद्धं ब्रह्मनिष्प्रतियोगिकं स्वमात्रमिति भावनापूर्वकं केवलकुंभकप्राणायामं चरेत्कुर्यादित्यर्थः॥६१॥६२॥

सर्वचिन्तां परित्यज्य सावधानेन चेतसा ॥ ६३ ॥
निर्विकल्पः प्रसन्नात्मा प्राणायामं समाचरेत्॥६४॥

(टीका) सिद्धाद्यासनारूढोयोगी सावधानेन चेतसा बाह्यांतर्विलसितसकलचिन्तां परित्यज्य नानाविधविकल्पशून्यतया निर्विकल्पो ब्रह्मणि समाहितचित्तः प्रसन्नात्मा ब्रह्मातिरिक्तं न किंचिदस्तीति केवलकुंभकप्राणायामं समभ्यसेत्कुर्यादित्यर्थः ॥६३॥६४॥

मरुदभ्यसनं सर्वं मनोयुक्तं समभ्यसेत् ॥ ६५ ॥
इतरत्र न कर्त्तव्या मनोवृत्तिर्मनीषिणा ॥ ६६ ॥

(टीका) रेचकादिसहितकेवलकुंभकात्मकमरुदभ्यसनं सर्वं ब्रह्मणि यथामनोयुक्तं पर्यवसन्नं भवेत्तथा समभ्यसेत् अतोमनीषिणा योगिना मनोवृत्तिरितरत्र ब्रह्मातिरिक्ते न कर्त्तव्या ब्रह्ममात्रविरूपविलयन्नेतव्यमित्यर्थः ॥ ६५ ॥ ६६ ॥

ओंतत्सदिति साद्धान्तिकविधिवाक्यानि पट्षष्ठिः

ओं तत्सदिति साद्धांतिकविधिवाक्यानिपट्षष्ठिः ॥ ६६ ॥
विधिप्रकरणविवरणं संपूर्णम् ॥

**अथ सार्द्धान्तिकबंधमोक्षवाक्यानि ॥**

अथ सार्द्धान्तिकबंधमोक्षमहावाक्यानि लिख्यन्ते ॥

विधिच्छागपक्षमहावाक्यसंस्कृतचित्तानां बंधमोक्षयाथात्म्यावगतये बंधमोक्षमहावाक्यजातं प्रकटयति ॥ देहादीनित्यादिना ॥

**देहादीनात्मत्वेनाभिमन्यते सोऽभिमान आत्मनो बंधः॥१॥**

**तन्निवृत्तिर्मोक्षः ॥ २ ॥**

( टीका ) चार्वाकादिबौद्धपंचकवद्देहादीन्देहेंद्रियमनोबुध्यादीनात्मत्वेनचाभिमन्यते देहोऽहमिन्द्रियाण्यहमित्याद्याकारकोयः सोऽभिमान आत्मनो बंधः तत्रात्मात्मीयाभिमतिवैरस्यपूर्वकं तन्निवृत्तिर्मोक्षः देहाद्यभिमतिभावाभावप्रभवौ बंधमोक्षौ भवत इत्यर्थः ॥१॥२॥

**देवमनुष्याद्युपासनाकामसंकल्पोबन्धः ॥ ३ ॥**

( टीका ) स्वभेदेन कामनाधिया ब्रह्मविष्ण्वीशेंद्रादिदेवानां मनुष्याणां शुकादिमुनीनामुपासना कर्त्तव्येति संकल्पोबंधः ॥३॥

**कर्तृत्वाद्यहंकारसंकल्पोबंधः ॥ ४ ॥**

( टीका ) सर्वकर्मकर्त्तातत्फलभोक्ताहमित्यहं भावनाकलितसंकल्पोबन्धः ॥ ४ ॥

**अणिमाद्यष्टैश्वर्याशासिद्धसंकल्पोबंधः ॥ ५ ॥**

( टीका ) अणिमामहिमागरिमालघिमाप्राप्तिप्राकाम्येशित्ववशित्वाष्टैश्वर्यं मे स्यादित्याशासिद्धसंकल्पोबंधः ॥ ५ ॥

---

( टि० ) अणिमा-परमाणुरूपतापत्तिः, महिमा-महत्त्वम्, लघिमा-तूलपिण्डवल्लघुत्व प्राप्तिः, गरिमा गुरुत्वम्, प्राप्तिः अङ्गुल्यग्रेणापि चन्द्रादिस्पर्शनशक्तिः, प्राकाम्यमिच्छानभिघातः, भूमावुन्मज्जति निमज्जति यथोदके, शरीरान्तःकरणेश्वरत्वमीशित्वम्. वशित्वम् सर्वत्र प्रभविष्णुत्वम् सर्वाण्येव भूतानि अनुगामित्वात् तदीप्सितं नातिक्रामन्ति ।

यमाद्यष्टाङ्गयोगसंकल्पोबंधः ॥ ६ ॥

( टीका ) यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगः साधनीय इति संकल्पोबंधः ॥ ६ ॥

केवलमोक्षापेक्षासंकल्पोबंधः ॥ ७ ॥

( टीका ) स्वाविद्याबंधमोक्षो मे स्यादिति केवलमोक्षापेक्षा संकल्पोपि बंध एव स्वस्य नित्यमोक्षस्वरूपत्वेन बंधसापेक्षसंकल्पस्यापि न विशेषत्वेन बंधत्वं सिद्धमित्यर्थः ॥ ७ ॥

संकल्पमात्रसंभवोबंधः ॥ ८ ॥

( टीका ) किंबहुना संकल्पमात्रस्य संभवः उत्पत्तिरपि बंधोभवति ॥८॥ मोक्षसङ्कल्पस्यापि बंधत्वे मोक्षः कीदृश इत्यत्राह

नित्यानित्यवस्तुविचारादनित्यसंसारसुखदुःखविषयसमस्तक्षेत्रममताबंधक्षयोमोक्षः ॥ ९ ॥

( टीका ) नित्येति नित्यानित्यवस्तुनोरात्मानात्मनोर्निष्प्रवियोगिकभावाभावरूपतया विचारात् स्वाज्ञत्वविकल्पितनित्यसंसारप्रादुर्भूतसुखदुःखविषयपूरितस्वदेहादिसमस्तक्षेत्रेष्वहंता ममता च बंधः तत्क्षय एव मोक्षः ॥ ९ ॥

मन एव मनुष्याणां कारणं बंधमोक्षयोः ॥ १० ॥
बंधाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥११॥

( टीका ) मनुष्यादिनां बंधमोक्षकारणं मन एव तत्रविषयासक्तं मनोबंधहेतुः निर्विषयं मनोमुक्तये भवतीति स्मृतम् ॥१०॥११॥

ममेति बध्यते जंतुर्निर्ममेति विमुच्यते ॥ १२ ॥

( टीका ) जन्तुः सामान्यं जीवजातं देहदारादावहंममेति अभिमानतोबध्यते निरहंममाभिमानतोबंधान्मुच्यते ॥ १२

अमत्वेन भवेज्जीवो निर्ममत्वेन केवलः ॥ १३ ॥

स्वास्मिन् स्वातिरिक्ते चाहंत्वेन ममत्वेनच जीवोभवतीति-तत्रपुनरहंकारममकाराभावेन केवलः परमात्मैव भवति ॥ १३ ॥

स्वसंकल्पवशाद्बद्धोनिःसंकल्पाद्विमुच्यते ॥ १४ ॥

( टीका ) इदं मेस्यादिदं मेस्यादिति जीवः स्वसंकल्पवशा-द्बध्यते संकल्पनीयस्वातिरिक्तं किमपि नेतिनिःसङ्कल्पवशा-द्विमुच्यते ॥ १४ ॥

द्रष्टादृश्यवशाद्बद्धो दृश्याभावेविमुच्यते ॥ १५ ॥

( टीका ) द्रष्टा स्वदृश्याभिनिवेशतोबध्यते तदभिमानाभा-वाद्विमुच्यते ॥ १५ ॥

इच्छामात्रमविद्येयं तन्नाशोमोक्षउच्यते ॥ १६ ॥

भोगेच्छामात्रकोबंधस्तत्यागोमोक्ष उच्यते ॥१७॥

( टीका ) आविद्यकभोगमात्रेच्छा बंधोविद्यया तत्यागोमोक्ष उच्यते ॥ १६ ॥ १७ ॥

चित्तचैत्यकलितोबंधस्तन्मुक्तिर्मुक्तिरुच्यते ॥ १८ ॥

( टीका ) चित्तजीवस्य चित्तचैत्ययोगतोबंधो भवति स्वाति-रिक्तचित्तचैत्यवैरल्यज्ञानतोमोक्षोभवति ॥ १८ ॥

अनास्थैव हि निर्वाणं दुःखमास्थापरिग्रहः ॥१९॥

( टीका ) सर्वत्रास्थाऽनास्थे बंधमोक्षहेतू भवत इत्यर्थः ॥१९॥

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ॥ २० ॥

( टीका ) सर्वोहि जंतुः सकामकर्मणा आगाम्यादिकर्मणा-विबध्यते निष्कामकर्मणा विद्याच कर्मकृतबंधनाद्विमुच्यते ॥२०॥

स्वरूपावस्थितिर्मुक्तिस्तद्भ्रंशोहंत्ववेदनम् ॥ २१ ॥

(टीका) स्वस्वरूपावस्थानंमुक्तिः स्वरूपविभ्रंशतोदेहादाव हंत्ववेदनं बंधोभवति ॥ २१ ॥

चित्ते चलति संसारो निश्चले मोक्ष उच्यते ॥२२॥

(टीका) स्वरूपतश्चेतश्चलनाचलने बंधमोक्षहेतू भवतः इत्यर्थः ॥ २२ ॥

बन्धोहि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः ॥२३॥

(टीका) बद्धः संसारी नानाविधवासनया बद्धोभवति हीति निःसंशयार्थः सर्ववासनाक्षयान्मोक्षोभवति ॥ २३ ॥

पदार्थभावनादार्ढ्यं बंध इत्यभिधीयते ॥ २४ ॥
वासना तानवं ब्रह्मन् मोक्ष इत्यभिधीयते ॥२५॥

(टीका) स्वातिरिक्तपदार्थों मे स्यादिति दृढवासनया बध्यते हेब्रह्मन् निदाघतद्वासनाजातस्य तानवमभावस्तेन यः सिध्यति स मोक्ष इत्यभिधीयते ॥ २४ ॥ २५ ॥

न मोक्षोनभसः पृष्ठे न पाताले न भूतले ॥ २६ ॥
सर्वाशासंक्षये चेतःक्षयोमोक्ष इतीष्यते ॥ २७ ॥

(टीका) एवं भूतोमोक्षः कासनमर्हतीत्यत्र पाताले भूतले नभः पृष्ठे ब्रह्मलोकादावपि मोक्षो न विद्यते चेतःकल्पित सर्वाशासंक्षये चेतःक्षयोभवति तत्क्षयतः प्रादुर्भूतोमोक्ष इतीष्यते ॥ २६ ॥ २७ ॥

मोक्षोमेस्त्विवतिचिंत्तांतर्जाताचेदुत्थितं मनः ॥२८॥

(टीका) स्वांतर्मनसि बंधसापेक्षमोक्षोमेस्त्विति तच्चिंता जाताचेत्स्वातिरेकेण मन उत्थितं भवति ॥ २८ ॥

मननोत्थे मनस्येष बंधः सांसारिकोमतः ॥ २९ ॥
एवं मननोत्थे मनसि एप सांसारिकोवंधोभवतीति मतः॥२९॥
तद्मार्जनमात्रं हि महासंसारतां गतम् ॥ ३० ॥
तत्प्रमार्जनमात्रं तु मोक्ष इत्यभिधीयते ॥ ३१ ॥
ओंतत्सदितिसार्द्धांतिकबंधमोक्षवाक्यान्ये
कत्रिंशत् ॥ ३१ ॥ ॥

( टीका ) तन्मनोमार्जयितव्यं तद्मार्जनतोवंधो दृढायते तत्प्रमार्जनमात्रेण मोक्षः स्वत एवाविर्भवतीत्यर्थः ॥ ३० ॥३१॥

स्वातिरिक्तवस्तुचितासामान्यं वंध उच्यते तच्चितापन्हवान्मोक्षः स्वत एव प्रसीदतीतिस्मृतेः आहत्यवाक्यसंख्या सप्तनवतिः ॥ ९७ ॥

बंधमोक्षप्रकरणं संपूर्णम् ॥ ॥

अथ सार्द्धांतिकाविद्वन्निंदावाक्यानि । अथयोऽन्यां देवतामुपास्तेऽन्योसावन्योहमस्मीति न स वेद यथा पशुः ॥ १ ॥

( टीका ) वंधमोक्षमहावाक्यार्थसंस्कृतधियामज्ञानिनिंदामहावाक्यानुसंधानतोमिथः सापेक्षस्वाज्ञस्वज्ञकलनाऽपन्हवसिद्धनिष्प्रतियोगिकब्रह्ममात्रावगतये अथ सार्द्धांतिकाविद्वन्निंदामहावाक्यानि लिख्यंते अथेत्यादिना अविद्वन् निंदारभ्यत इत्यथशब्द आरंभार्थः मद्भिन्नोऽयमन्योऽसावीश्वरः परमात्मा वा तस्मादप्यहमन्योजीवोदेहोवास्मीति आवयोर्भिन्नमिदं जगदिति यः स्वान्यां देवतामुपास्ते यथा ज्ञानगंधविकलोऽयं पशुस्तथासोऽयं न वेदयत एवमतो विद्वानहमेवेदं सर्वमिति जानीयादित्यर्थः ॥ १ ॥

अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः समृत्युमाप्नोति ॥ २ ॥

( टीका ) अत्रास्मिन्निर्भेदे ब्रह्मणि जगज्जीवेशसाक्षिणां मिथोभिदामिव मन्यमानः स्वाज्ञोमूढः स्वाधिष्ठितशरीरेण साकं शतधा सहस्रधा भिन्नः स्वाविद्यया खंडितः सन्योमुह्यति समृत्योर्मृत्युंजनिमृतिपरंपरामाप्नोति घटीयंत्रवदनिशांतं संसरतीत्यर्थः ॥२॥

कर्तृत्वाद्यहंकारभावनारूढोमूढः ॥ ३ ॥

( टीका ) तूलांतःकरणाविद्याकल्पितशरीरमास्थाय कर्त्ताहंकारभावनारूढोमूढः स्वाविद्यावृतोभवतीत्यर्थः ॥ ३ ॥

मृत्योःसमृत्युमाप्नोति य इह नानेव पश्यति ॥४॥

( टीका ) इह ब्रह्मण्यनानारूपे यस्तुजगज्जीवेशादि नानेव पश्यति समृत्योर्मृत्युमाप्नोतीत्युक्तार्थम् ॥ ४ ॥

अनुभूतिं विना मूढोवृथा ब्रह्मणि मोदते ॥ ५ ॥

( टीका ) जलाशयप्रतिबिंबितसहकारशाखाग्रलंबमानफलास्वादनमोदो यथा नार्थवान्तथामूढः स्वाज्ञः प्रत्यगभिन्ने ब्रह्मणि ब्रह्माहमस्मीत्यनुभूतिं विना वृथा मोदते स्वानुभूत्यन्वितज्ञानं कैवल्यफलदं हितादिति स्मृतेः ॥ ५ ॥ ॥

प्रतिबिंबितशाखाग्रफलास्वादनमोदवत् ॥ ६ ॥
अष्टाङ्गञ्च चतुष्पादं त्रिस्थानं पंचदैवतं ॥ ७ ॥
ॐकारं यो न जानाति ब्राह्मणो न भवेत्तु सः ॥८॥

( टीका ) अकारोकारमकारअर्धमात्राविन्दुनादकलाकलातीततत्परभेदेनाष्टाङ्गं विश्वतैजसप्राज्ञतुर्यभेदेन विराट्सूत्रबीजतुर्यभेदेन चतुष्पादं कैलासवैकुंठब्रह्मलोकभेदेन च त्रिस्थानं तमोरजःसत्वभेदेन जाग्रत्स्वप्नसुषुप्तिभेदेन ब्रह्मविष्णुरुद्रेश्वरसदाशिवभेदेन पंचदैवतं एवमुक्तलक्षणलक्षितमोंकारं परमात्मानं स्वगात्रमिति यो न जानाति स तु ब्रह्मनिष्ठो न भवतीत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥

अतिवर्णाश्रमं रूपं सच्चिदानन्दलक्षणम् ॥ ९ ॥
यो न जानाति सो विद्वान्कदा मुक्तो भविष्यति।१०।

(टीका) वर्णाश्रमविशिष्टदेहोपलक्षिताऽविद्या यदतत्कार्यजातमतीत्य वर्त्तत इत्यतिवर्णाश्रमं रूपं सच्चिदानन्दलक्षणं ब्रह्म निष्प्रतियोगिकं स्वमात्रमिति यो न जानाति सोऽयमविद्वान् कदा वा मुक्तो भविष्यति न कदापीत्यर्थः ॥ ९ ॥ १० ॥

कुशला ब्रह्मवार्त्तायां वृत्तिहीनाः सुरागिणः॥११॥
तेप्यज्ञानतया नूनं पुनरायान्ति यांति च ॥ १२ ॥

(टीका) स्वातिरिक्तदेहात्मधिया सर्वत्र इदं मे स्यादिदं मे स्यादिति सुरागिणः अतएव ब्रह्ममात्रवृत्तिहीना अपि न्यायादितंत्रत्रयपारीणत्वेन सकृद्भाष्यावलोकनतो ब्रह्मवार्त्तायामतीवकुशला भवन्ति तद्वार्त्ताकौशल्येन ते कृतकृत्याभवेयुरित्यत्राह तेपीति ब्रह्मानुभववृत्यभावात्तेपि अज्ञानतया पुनरायांति यान्ति च तेषामाभासज्ञानित्वेन जननमरणादिसंसारनिवृत्तिर्नस्यादित्यर्थः ॥ ११ ॥१२॥

काष्ठदण्डो धृतो येन सर्वाशीज्ञानवर्जितः ॥१३॥

(टीका) ज्ञानदण्डवैकल्येन काष्ठदण्डो येन धृतः स सर्वाशी कुक्षिम्भरिर्भवति तितिक्षाज्ञानवैराग्यशमादिगुणवर्ज्जितः भिक्षामात्रेण योजीवेत्सपापी यतिवृत्तिहेतिश्रुतेः ॥ १३ ॥

स्वायत्तमेकांतहितं स्वेप्सिततत्यागवेदनम् ॥ १४ ॥
यस्य दुष्करतां यातं धिक्तं पुरुषकीटकम् ॥ १५ ॥

(टीका) यस्य स्वाज्ञानमहिम्ना इदं मेस्यादिदं मेस्यादितिस्त्रोप्सितोयः कामपुगः तद्रूपातिरिक्तं नेतित्यागवेदनं स्वातिरिक्तापन्हवसिद्धस्वमात्रज्ञानं सहायांतरनैरपेक्ष्येण हितान्तराभावादेकांतहितं स्वायत्तं स्वेनैव निर्वर्तितुं शक्यमपि दुष्करतां यातं कर्त्तुमश-

क्यतया भातं भवेत्तं पुरुषकीटकं धिग् धिगिति श्रुतिः कुत्सयतीत्यर्थः ॥ १४ ॥ १५ ॥

अद्वितीयब्रह्मतत्वं नजानंति यदातदा ॥ १६ ॥
भ्रांताएवाखिलास्तेषां क्वमुक्तिः क्वेहवासुखम् ॥१७॥

( टीका ) अखिलवेदशास्त्राध्येतारोब्राह्मणा यदा निष्प्रतियोगिकाद्वितीयब्रह्मतत्वं स्वमात्रामिति नजानन्ति तदैव ते भ्रान्ताभवन्ति तेषांस्वातिरिक्तमुक्तिः स्वमात्रसुखं वा केह सिध्यति तदधीतमखिलं भारमेवेत्यर्थः भारोऽविवेकिनः शास्त्रमितिश्रुतेः ॥१६॥१७॥

अज्ञानोपहतोबाल्ये यौवने वनिताहृतः ॥ १८ ॥
शेषे कलत्रचिंतार्त्तः किंकरोति नराधमः ॥ १९ ॥

( टीका ) बाल्यकौमारयौवनाद्यवस्थासुखश्रेयश्चिंतनं विना स्वा ज्ञानतत्कार्यकलत्रपुत्रादिचिंतयाभिहितः सन् तत्सत्वाऽसत्वाभ्यामार्तिं भजति सनराधमःस्वात्मनोहितं किंकरोति न किमपीत्यर्थः ॥ १८ ॥ १९ ॥

इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन जंतवः ॥ २० ॥
धराविवरमग्नानां कीटानां समतां गताः ॥२१॥

( टीका ) मानुषभावापत्या जंतवोब्राह्मणाः सर्वापन्हवसिद्धं ब्रह्मनिष्प्रतियोगिकस्वमात्रमिति परमार्थचिन्तनं विनेदं मेस्यादितीच्छा तत्कुंठकोद्वेषःआभ्यामिच्छाद्वेषाभ्यांसमुत्थेन द्वंद्वमोहेन मूढाः धराविवरमग्नकीटानां समतां गताः प्राप्ता इत्यर्थः ॥ २० ॥ २१ ॥

ॐतत्सदितिसाद्धांतिकाद्विदन्निन्दावाक्यान्येकविंशतिः ॥ ॥

(टीका) आहत्यवाक्यानि ॥ ११८ ॥ इति अविद्वन्निन्दाप्रकरणं संपूर्णम् ॥ ३ ॥ ॥

अथ सार्द्धान्तिकजगन्मिथ्यावाक्यानि ।

(टीका) अज्ञाननिंदामहावाक्यार्थसंस्कृतानामज्ञत्वहेत्वतत्प्रपञ्चापन्हवसिद्धब्रह्ममात्रावगतयेऽथसार्द्धांतिकजगन्मिथ्यामहावाक्यानि लिख्यन्ते नान्यदित्यादिना ।

नान्यत्किंचन मिषत् ॥ १ ॥

ब्रह्मातिरेकेण किंचन किंचिदपि अन्यत् मिषचलत् जङ्गमं स्थावरं च नास्तीत्यर्थः ॥ १ ॥

वाचारम्भणं विकारोनामधेयं ॥ २ ॥

(टीका) मृत्स्थानीयकारणब्रह्मातिरिक्तघटस्थानीयकार्यजगत् वाचारम्भणं वाग्विकारः नामधेयं नाममात्रं मृत्स्थानीयब्रह्मातिरिक्तघटशरावादिस्थानीयं जगज्जातं नास्तीत्यर्थः ॥ २ ॥

अतोन्यदार्त्तम् ॥ ३ ॥

(टीका) अतोब्रह्मणोन्यज्जगज्जातमात्रं मिथ्येत्यर्थः ॥ ३ ॥

नतु तद्द्वितीयमस्ति ॥ ४ ॥

(टीका) तदद्वैतब्रह्मातिरेकेण द्वितीयमविद्यापदं नत्वस्ति।४।

नात्र काचन भिदाऽस्ति नैव तत्र काचनभिदाऽस्ति । ५॥

(टीका) अत्र प्रत्यगात्मनि[1] कामसंकल्पादिरूपेण न कदाचन भिदास्ति तत्र परमात्मनि नामरूपाकारेण नैव काचनभिदास्ति॥५॥

सर्वविकारजातं मायामात्रम् ॥ ६ ॥

---

१ प्रातिलोम्येन अञ्चतीति प्रत्यक् जीवः, तदभिन्ने ब्रह्मणीत्यर्थः ।

(टीका) स्वातिरेकेण यद्यद्विकारजातं भाति तत्तत्सर्वं मायामात्रं मिथ्येत्यर्थः ॥ ६ ॥

सर्वत्र नह्यस्ति द्वैतसिद्धिः ॥ ७ ॥

(टीका) सर्वत्र अखंडैकरसे ब्रह्मणि द्वैतप्रपञ्चसिद्धिर्नह्यस्ति ॥ ७ ॥

नास्ति द्वैतं कुतोमर्त्यम् ॥ ८ ॥

(टीका) अद्वैतस्य निष्प्रतियोगिकत्वेन जगज्जीवेशादिभेदभिन्नं द्वैतरूपं जगन्नास्ति तत्रात्रान्तरभेदरूपं मर्त्यं कुतः संभवति ॥ ८ ॥

प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः ॥ ९ ॥

(टीका) शशविषाणकल्पः प्रपञ्चो यदि विद्येत भवेत्तदा ब्रह्मातिरिक्तं न किंचिदस्तीति ज्ञानतोनिवर्त्तेतेत्यत्र न हि संशयोस्ति॥

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १० ॥

(टीका) इदं परिदृश्यमानं द्वैतजातं मायाकार्यत्वेन मायामात्रं परमार्थतस्त्वद्वैतं निष्प्रतियोगिकब्रह्ममात्रमवशिष्यतइत्यर्थः१०

विकल्पोविनिवर्त्तेत कल्पितो यदि केनचित् ॥११॥

(टीका) निष्प्रतियोगिकब्रह्मणि गुरुशिष्यशास्त्रादिविकल्पः केनचित्स्वाज्ञेन यदि विकल्पितः स्यात्तदास्वज्ञदृष्ट्यानिवर्तेत ॥११॥

उपदेशादयंवादो ज्ञाते द्वैतं न विद्यते ॥ १२ ॥

(टीका) उपदेशात् उपदेशार्थं गुरुशिष्यादिवादोविकल्पितोऽभूत् केवलं ब्रह्ममात्रस्यैव तत्त्वान्नास्त्यनात्मेति निश्चिन्विति श्रुत्यर्थज्ञानतः निष्प्रतियोगिकाखण्डैकरसब्रह्मणि स्वमात्रमिति ज्ञाते गुरुशिष्यशास्त्रादिभेदभिन्नं द्वैतं न विद्यते अद्वैतस्य निष्प्रतियोगिकस्वमात्रत्वादित्यर्थः ॥ १२ ॥

द्वितीयकारणाभावादनुत्पन्नमिदं जगत् ॥ १३ ॥
यथैवेदं नभःशून्यं जगच्छून्यं तथैवहि ॥ १४ ॥
इदं प्रपञ्चं यत्किंचिद्यज्जगति वीक्ष्यते ॥ १५ ॥
दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥ १६ ॥
इदं प्रपञ्चंनास्त्येवनोत्पन्नंनो स्थितंजगत् ॥ १७ ॥
चित्तंप्रपञ्चमित्याहुर्नास्तिनास्त्येवसर्वदा ॥ १८ ॥
मायाकार्यादिकं नास्तिमायानास्तिभयं नहि॥१९॥
परंब्रह्माहमस्मीति स्मरणस्य मनोनहि ॥ २० ॥

(टीका) स्वातिरिक्तकारणांतरवैरल्यादिदं जगदनुत्पन्नमेव कार्यकारणयोरप्यजत्वात् सबाह्याभ्यंतरोह्यज इतिश्रुतेः एतच्चदुत्तमं सत्यं यत्र किंचिन्नजायत इति गौडपादाचार्योक्तेश्च ॥१३॥ स्वाज्ञदृष्ट्या जन्म गच्छतीति जगत् सम्यग्ज्ञदृष्ट्या नभोवच्छून्यमेव ब्रह्मणः स्वमात्रत्वादित्यर्थः ॥ १४ ॥ इदं प्रपंचमित्यादिर्लिंगव्यत्ययश्छांदसः अयं प्रपंचः स्वाविद्यापादस्तत्र जगति स्वाविद्यापादे सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा घटादिदृश्यरूपमिंद्रियादिदृग्रूपं च यद्यत्किंचिद्वीक्ष्यते तत्सर्वं शशविषाणवदलीकं मंतव्यमित्यर्थः ॥ १५ ॥ १६ ॥ स्वाज्ञादिदृष्टिमोहे सत्यसतिनिर्विशेषे ब्रह्मणि अयं प्रपंचोनास्त्येव उत्पत्त्यादिविशिष्टं जगदस्तीति चेत्तत्राह नेति कदापि नोत्पन्नं न स्थितं न नष्टं चेति मंतव्यं प्रपंच इतिव्यवहारः किंमूलक इत्यत आह चित्तमिति प्रपंचकल्पनामूलं चित्तमित्याहुः ब्रह्मातिरेकेण प्रपंचकल्पनामूलचित्तमपि सर्वदा नास्ति नास्त्येवेत्याहुरितिरपन्हवार्थः ॥ १७ ॥ १८ ॥ निष्प्रतियोगिकनिर्मायैककालत्रयेपि या माया नास्ति सा माया तत्कार्यमनंतकोटिब्रह्मांडजातं ब्रह्माहमस्मीति स्मृतिमन्मनोपि तत्कल्पितद्वैतजं भयं चापि नह्यस्तीत्यर्थः ॥ १९ ॥ २० ॥

५

वंध्याकुमारवचने भीतिश्चेदस्त्विदं जगत् ॥ २१ ॥
शशशृंगेण नागेंद्रोमृतश्चेज्जगदस्ति सत् ॥ २२ ॥
मृगतृष्णाजलं पीत्वा तृप्तश्चेदस्त्विदं जगत् ॥२३॥
गंधर्वनगरे सत्ये जगद्भवति सर्वदा ॥ २४ ॥
गगने नीलिमासत्ये जगत्सत्यं भविष्यति ॥ २५ ॥
मासात्पूर्वं मृतोमर्त्योह्यागतश्चेज्जगद्भवेत् ॥ २६ ॥
गोस्तनाद्युद्भवं क्षीरं पुनरारोपयेज्जगत् ॥ २७ ॥
ज्वालाग्निमंडले पद्मवृद्धिश्चेदस्त्विदं जगत् ॥ २८ ॥
ज्ञानिनोहृदयंमूढैर्ज्ञातंचेदस्त्विदं जगत् ॥ २९ ॥
अजकुक्षौ जगन्नास्ति ह्यात्मकुक्षौ जगन्नहि ॥३०॥
सर्वदा भेदकलनंद्वैताद्वैतं नविद्यते ॥ ३१ ॥
नास्तिनास्मिजगत्सर्वं गुरुशिष्यादिकं नहि ॥३२॥
सच्चिदानंदमात्रोहमनुत्पन्नमिदंजगत् ॥ ३३ ॥

( टीका )कालत्रयेप्यलब्धात्मकवंध्याकुमारकठोरवचनेन भीतो भीतश्चेत् ॥ २१ ॥ शशशृंगांकुशेन नागेन्द्रोभिन्नमूर्ध्वासन्मृतश्चेत् ॥ २२ ॥ मरुमरीचिकां पीत्वा तृषार्तो वितृषश्चेत् ॥२३॥ मुमूर्षो-र्दस्याविभातगंधर्वनगरं नित्यं चेत् ॥ २४ ॥ गगनाज्ञानिविकल्पित-गगननीलिमा वास्तवश्चेत् ॥ २५ ॥ मासत्रयात्पूर्वं मृतो नरः पुनः स्वगृहमेत्य दारेषु सूनुंजनयेच्चेत् ॥ २६ ॥ गोस्तनजं क्षीरं पुनस्तन्मार्गेण समारोपितं चेत् ॥ २७ ॥ वन्हिज्वालामंडले पद्म-वृद्धिश्चेत् ॥ २८ ॥ निर्विशेषब्रह्मज्ञानिनोहृदयं स्वाज्ञैर्विस्पष्टं ज्ञातं चेत्तदा निर्विशेषब्रह्मणि कालत्रयेऽपि जगत्सत्यं स्यादेवेत्यर्थः॥२९॥ चतुराननकुक्षौ स्वकुक्षावपि कालत्रयेपि सर्वथा सर्वप्रकारभेदकलनं समतियोगिकद्वैतात्मकं जगन्न विद्यते ॥ ३० ॥ ३१ ॥ अनृतज-डदुःखप्रपंचापन्हवसिद्धनिष्प्रतियोगिकसच्चिदानंदमात्रोहं गुरुशि-ष्यादिभेदकलितं जगत्कालत्रयेपि नोत्पन्नमित्यर्थः ॥३२॥३३॥

ॐ तत्सदिति साद्धीतिकजगन्मिथ्यावाक्यानित्र- यस्त्रिंशत् अथसार्द्धातिकोपदेशवाक्यानि स य एषोऽ णिमैत्तदात्म्यमिदं सर्वं तत्सत्यं स आत्मातत्त्वमसि- श्वेत केतो ॥ १ ॥

अभयं वैजनकप्राप्तोसि ॥ २ ॥

ब्रह्मचर्यमहिंसांचापरिग्रहं च सत्यं च यत्नेनहेर- क्षतो हेरक्षतो हेरक्षतइति ॥ ३ ॥

( टीका ) प्रतियोगिविनिर्मुक्तपरमात्माज उच्यते प्रतियोगि- विनिर्मुक्तमनात्माप्यज एव हीतिस्मृतेः आइत्य वाक्यान्येकपंचाश- दुत्तरशतं ॥ १५१ ॥ जगन्मिथ्याप्रकरणविवरणं संपूर्णम् ॥ ४ ॥ जगन्मिथ्यामहावाक्यार्थसंस्कृतानां जगदपन्हवसिद्धं ब्रह्मास्मीत्युप- देष्टुं अथ सार्द्धांतिकोपदेशमहावाक्यानि लिख्यन्ते स य इत्यादिना यएषोऽणिमासर्वप्रत्यक्त्वेनाभिमतः स एव परमात्मा तदज्ञानविक- ल्पितमिदं सर्वमेतदात्म्यं तत्सत्तातिरिक्तसत्ताभावात् यत्स्वातिरिक्त- प्रपंचसत्ता प्रदं तदेव सत्यं यत्सत्तामात्रतयाऽवशिष्यते स परमात्मा हेश्वेतकेतो यत्परमात्मरूपेणावशिष्टं तत्वमसि तदेव त्वमसि नेतर इत्यर्थः ॥ १ ॥ हेजनक भयहेतुद्वैतापन्हवसिद्धपरमाद्वयरूपमभयमेव ब्रह्म प्राप्तोसि ब्रह्मैव भवसीत्यर्थः ॥ २ ॥ हेशिष्या यूयं निर्विशेष- ब्रह्मप्राप्तिसाधनतया बाह्यमांतरं चेति द्विविधं ब्रह्मचर्यं स्मरणं स्पर्शनं केलिः कीर्त्तनं गुह्यभाषणं संकल्पोध्यवसायश्च क्रियानि- र्वृत्तिरेव च एतन्मैथुनमष्टांगं प्रवदंति मनीषिणः विपरीतं ब्रह्मचर्यं मनुष्ठेयं मुमुक्षुभिरिति श्रुतिसिद्धाष्टांगमैथुनवर्जितं बाह्यब्रह्मचर्यं ब्रह्मानुसंधानमांतरं प्राणिमात्रापीडनमहिंसां च प्राणधारणेतरा- परिग्रहं च भूतहितयथार्थाभिभाषणं सत्यं च यथाबलं रक्षत आवृत्ति- रादरार्था रक्षत इतिच्छांदसम् ॥ ३ ॥

तत्वमसि त्वंतदसि ॥ ४ ॥
यन्मनसा न मनुते येनाहुर्मनोमतम् ॥ ५ ॥
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥
यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ॥७॥

( टीका ) त्वपदवाच्योजीवः त्वंपदलक्ष्यं प्रत्यगात्मा तत्पदवाच्यईश्वरः तत्पदलक्ष्यं ब्रह्मत्वतत्पदवाच्यार्थत्यागपूर्वकं जहदादिलक्षणया शोधित त्वंतत्पदलक्ष्ययोरसिपदघटकभागलक्षणयैक्यभागसिद्धं प्रत्यगभिन्नं ब्रह्मावशिष्यतेजहदादिभेदेन लक्षणात्रिविधा गंगायां घोषः प्रतिवसतीत्यत्र गंगाप्रवाहे तदसंभवात् तत्प्रवाहत्यागपूर्वकं लक्षणया तत्तीरे घोषो वर्त्तत इति या साजहल्लक्षणा मनो ब्रह्मेतिवत् मनस्तद्वृत्तित्यागातद्वृत्तिसद्सद्भावाभावप्रकाशकतया प्रत्यगात्मा लक्ष्यते मंचाः क्रोशंतीत्यत्र वाच्यार्थापरित्यागपूर्वकं मंत्रस्थाः पुरुषाः क्रोशंतीति या लक्ष्यते सेयमजहल्लक्षणा सत्यं ज्ञानमनंतं ब्रह्मेतिवत् सत्यादिवाक्यार्थे सत्यादिकमविहाय सत्यादि स्वरूपं ब्रह्मेति लक्ष्यते कश्चिदेको देवदत्तः काश्मीरदेशे सार्वभौमो दृष्टः कालविपर्ययात्स एव केरलदेशे तु भिक्षाशी दृष्टः तद्देश तत्कालैतद्देशैतत्कालगतसार्वभौमत्वं भिक्षुतां विहाय तद्देहमात्रग्राहि लक्षणाभागलक्षणा तत्वमसीतिवत् त्वंतत्पदगतवाच्यार्थैकदेशत्यागपूर्वकत्वंतल्लक्ष्यैक्यसिद्धं तद्गतहेयांशापाये ब्रह्ममात्रमवशिष्यत इत्यर्थः ॥ ४ ॥ कामादिवृत्तिमन्मनसा यत्स्वप्रवृत्तिनिमित्तं न मनुते

*केनोपनिषद्भाष्ये तु—

( टिप्पणी ) येन ब्रह्मणा मनोऽपि विषयीकृतं नित्यविज्ञानस्वरूपेणेत्यर्थः तत् । सर्वकरणानामविषयं तानि च सर्वव्यापाराणि सविषयाणि नित्यविज्ञानस्वरूपावभासकतया येनाऽवभास्यन्त इति श्लोकार्थः । “क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति ” इति स्मृतेरिति व्याख्यातम् ।

न संकल्पयति मनोनिमित्तस्य मनोवृत्तिजातभासकत्वान्मनना-दिसामर्थ्यस्य स्वाप्रवृत्तिनिमित्तचैतन्याधीनत्वाच्च ब्रह्मविदो येन स्वनिमित्तभूतेन सवृत्तिकं मनोमतं विषयीकृतमित्याहुः तद्विप्र-त्यक्तत्वं पराक्स्वसापेक्षप्रत्यक्स्वापाये तत्तदेव ब्रह्ममात्रं विद्धि अव-धारणार्थं स्पष्टयति। नेति यत्स्वाज्ञं स्वज्ञा इदन्त्वेन अहन्त्वे नोपासते ब्रह्मविष्णुरुद्रादिकं तद्ब्रह्म न भवतीत्यर्थः॥ ५६॥ यन्निष्प्रतियोगिकपरं ब्रह्म स्वाज्ञविकल्पितभूतभौतिकप्रसक्तौ तत्सर्वं प्रत्यगात्मा भवति स्वाधेयविश्वप्रसक्तौ तदाधारतया महद्व्यापकं प्रत्यगभिन्नं ब्रह्मैव विश्वस्यायतनं विश्वापवादाधिष्ठानमित्यर्थः॥७॥

सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्॥ ८॥
अंतः पूर्णोबहिः पूर्णः पूर्णकुंभ इवार्णवे॥ ९॥
अंतः शून्योबहिः शून्यः शून्यकुंभ इवांबरे॥१०॥
माभवग्राह्यभावात्माग्राहकात्माच माभव॥११॥
भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयोभव॥१२॥
द्रष्टृदर्शनदृश्यानि त्यक्त्वावासनया सह॥१३॥
दर्शनप्रथमाभासमात्मानं केवलं भज॥ १४॥
चित्ताकाशं चिदाकाशमाकाशं च तृतीयकं।१५॥
द्वाभ्यां शून्यतरं विद्धि चिदाकाशं महामुने।१६॥

(टीका) यत्सूक्ष्मात्प्रत्यगभिन्नब्रह्मणः सूक्ष्मतरं निर्विशेषब्र-ह्ममात्रं नित्यं हे शिष्य तत्त्वमेव तत् प्रत्यक्परयोरेकत्वे अहं ब्रह्मा-स्मीति श्रुतेः॥ ८॥ अर्णवस्थपूर्णकुंभवदंबरस्थशून्यकुंभवच्च-निर्विशेषतयांतर्बाह्यकलनाशून्यं विभातांतर्बाह्यान्तरात्मपूर्णस्वरूपेण परमात्मावशिष्यत इत्यर्थः॥ ९॥ १०॥ मनःकल्पितशरीरादि-विषयजातं ग्राह्यं तत्कल्पकमानसवृत्तिजातं ग्राहकं देहत्रयात्मा जीवत्रयात्मा च माभवग्राह्यग्राहकादिनिखिलभावनापन्हवशिष्टे ब्रह्म-

स्वमात्रमिति ज्ञात्वा तन्मात्रपदवीं भजेदित्यर्थः ॥ ११ ॥ १२ ॥ स्वातिरिक्तद्रष्टाजीवः दर्शनं घटादिविषयकज्ञानं दृश्यं घटादि द्रष्टाहमित्यादिवासनया सह त्रिपुटीं निरस्यापवादं कृत्वा तदप वादप्रथमाभासं प्रत्यंचमात्मानं पराक्सापेक्षप्रत्यग्भावविरलं केवलं परमात्मानं भज ॥ १३ ॥ १४ ॥ सदा चिद्रूपेण काशत इति चिदाकाशं ब्रह्मस्याज्ञवृष्ट्या चिद्बदवभातचित्तोपल क्षिताविद्यापवादाकाशं परिकल्पितं ततोभूताकाशोपलक्षितपंचभूत भौतिकाकाशं कल्पितं ताभ्यां चित्ताकाशभुताकाशाभ्यां शून्यतां चित्ततत्कार्यापन्हवसिद्धं चिदाकाशं हे महामुने स्वमात्रमिति विद्धि जानीहि इत्यर्थः ॥ १५ ॥ १६ ॥

ध्यानतोहृदयाकाशेचितिचिच्चक्रधारया ॥ १७ ॥
मनोमारय निःशंकंत्वां प्रबध्नंतिनारयः ॥ १८ ॥
भोगैकवासनांत्यक्त्वात्यज त्वंभेदवासनाम् ॥ १९ ॥
भावाभावौततस्त्यक्त्वानिर्विकल्पः स्थिरोभव ॥ २० ॥
त्यजधर्ममधर्मंचउभेसत्यान्टतेत्यज ॥ २१ ॥
उभेसत्यान्टतेत्यक्त्वायेनत्यजसि तत्त्यज ॥ २२ ॥
आत्मन्यतीतेसर्वस्मात्सर्वरूपेथवातते ॥ २३ ॥
कोबंधः कश्चवामोक्षोनिर्मूलंमननं कुरु ॥ २४ ॥

(टीका) ब्रह्माहमहंब्रह्मेतिध्यानेन हृदयाकाशे तदवभासिकायां चिति स्वाज्ञविकल्पितमनउपलक्षितलिंगशरीरं चिदतिरिक्तं नेति चिच्चक्रधारयानिःशंकं निर्दयं मारय अपन्हवं कुरु ततस्त्वां कामादयो नहि प्रबध्नंति स्पष्टं नपारयंतीत्यर्थः ॥ १७ ॥ १८ ॥ नानाविधस्र क्चंदनवानिताभक्ष्यभोज्यादिभोग एव परायणमिति भोगैकवासनां जगज्जीवेशसादृश्यादिभेदवासनां च त्यक्त्वा ततस्तदस्तिनास्तीति तद्भावाभावविभ्रमावपित्यक्त्वापन्हवं कृत्वा स्वयं निष्पत्तियोगिक

निर्विकल्पोभूत्वास्थिरोभवेत्यर्थः ॥ १९ ॥ २० ॥ श्रुतिस्मृतिविहितं धर्मं श्रुतिस्मृतिप्रतिपिद्धमधर्मं च चाक्षुपं सत्यं मानसमनृतं चोभे-सत्यानृते स्वातिरिक्तं नेति त्यज यद्वा उभे सत्यानृते त्यक्त्वा-पन्हवं कृत्वा येन सम्यग्ज्ञानेनापन्हवं करोषि तद्वृत्तिमपि परित्यज्य ब्रह्ममात्रं भजेत्यर्थः ॥ २१ ॥ २२ ॥ सर्वंखल्विदं ब्रह्मेति श्रुतिसिद्ध-सर्वरूपे तते सर्वव्यापके अथवा सर्वविशेषंनेति इति विहाय यदवशिष्यते तदद्वयं ब्रह्मेति श्रुतिसिद्धेसर्वस्मादतीते सर्वाप-न्हवसिद्धे निष्प्रतियोगिकपरमात्मनि कोवातूलाविद्याभागद्वय विकल्पितोबंधः कोवातूलाविद्या तूर्यभागविकल्पितमोक्षश्चेत्याक्षे पतोनिर्मूलं मननं कुरु स्वातिरिक्तबंधमोक्षकलनानास्तीतिब्रह्म-मात्रंभवेत्यर्थः ॥ २३ ॥ २४ ॥

आशायातु निराशात्वमभावं यातु भावना ॥२५॥
अमनस्त्वं मनोयातुतवासंगेन जीवतः ॥ २६ ॥
एकमाद्यंतरहितंचिन्मात्रममलंततं ॥ २७ ॥
खादप्यतितरां सूक्ष्मंतद्ब्रह्मासिनसंशयः ॥ २८ ॥
रक्षकोविष्णुरित्यादि ब्रह्मासृष्टेस्तुकारणम् ॥२९॥
संहारेरुद्रइत्येवं सर्वं मिथ्येति निश्चिनु ॥ ३० ॥
मत्यक्तं नास्ति किंचिद्वा मत्यक्तापृथिवीतुवा ॥ ३१ ॥
मयातिरिक्तंयद्यद्वातत्तन्नास्तीतिनिश्चिनु ॥ ३२ ॥
अनात्मेतिप्रसंगोवा अनात्मेतिमनोपिवा ॥ ३३ ॥

( टीका ) सर्वत्रासंगतयाजीवतो जीवन्मुक्तस्य तवस्वदृष्ट्या कालत्रयेऽप्यसंभव स्वातिरिक्ताशा निराशात्वं यातु स्वातिरिक्तव स्त्वस्तीतिभावना प्रसक्तोचेत्तदासाऽभावपदमपन्हवं वा यातु स्वातिरेकेण मनः प्रसक्तौतदमनस्कं यातु आशादिवृत्तिमन्मनसो-मायिकत्वेन कारणातुल्यत्वादित्यर्थः ॥ २५ ॥ २६ ॥ भूतादि-

कालत्रयेप्येकरूपेणावर्तनादेकं उत्पत्तिप्रलयाभावादाद्यंतरहितं चिद्रूपणावशेषणाच्चिन्मात्रं परिच्छिन्नमायामलवैरल्यादमलं तं अशब्दनिर्गुणरूपेण शब्दगुणकत्वादपि अतितरां केशकोट्यंशैक भागसूक्ष्मं यन्निर्विशेषचैतन्यमवशिष्यते तद्ब्रह्मासीत्यत्रनास्ति संशयोस्तीत्यर्थः ॥ २७ ॥ २८ ॥ स्वाज्ञदृष्टि विकल्पतप्रपंच सत्वे तत्सृष्टिस्थितिसंहारकारणतया ब्रह्मविष्णुरुद्रादयः संत्येव परमार्थदृष्ट्या प्रपंचस्य मायिकत्वेन कारणतुल्यत्वात् विष्णुःपालयति ब्रह्मासृजति रुद्रः संहरतीत्यादिकं सर्वमिथ्येति निश्चिन्वित्यर्थः ॥ २९ ॥ निर्विशेष ब्रह्मरूपेण मया परित्यक्तं मत्तोतिरिक्तं वा पृथिव्याद्युपलक्षितभूतभौतिकज.तं यत्किंचिदस्तीति मन्यसे तत्तु नास्तीति निश्चिनु अहमेवेदं सर्वमितिश्रुतेः ॥ ३० ॥ ३१ ॥ ३२ ॥ अनात्मापन्हवसिद्धात्मनि स्वमात्रमितिज्ञाते तस्य निष्प्रतियोगिकतया मायारूपानात्माऽस्तिनास्तीति प्रसंगोत्रात्रापि नयुज्यते कारणरूपेणाऽनात्माभावेऽपि उपलब्धिविषयतोमनोरूपेण तद्विकल्पितजगद्रूपेणवा नात्मास्यादितितत्राह ।

अनात्मेतिजगद्वापि नास्त्यनात्मेतिनिश्चिनु ॥३४॥
आदिमध्यावसानेषु दुःखं सर्व मिदं यतः ॥३५॥
तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठोभवानघ ॥३६॥
निद्राया लोकवार्तायाः शब्दादेरात्मविस्मृतेः॥३७॥
क्वचिन्नावसरंदत्वा चिंतयात्मानमात्मनि ॥३८॥
सर्वव्यापारमुत्सृज्य अहं ब्रह्मेति भावय ॥३९॥
अहं ब्रह्मेति निश्चित्य त्वहं भावं परित्यज ॥४०॥
घटाकाशंमहाकाश इवात्मानं परात्मनि ॥४१॥

( टीका ) अनात्मेति अनात्मास्तीतिमननक्रन्मनोपि नास्ति स्वाज्ञानतोजगत् गच्छतीति जगद्वापि नास्तीतिनिश्चिनुमायाना-

स्तिमनोनास्तीतिश्रुतेः ॥ ३३ ॥ ३४ ॥ यस्मात्स्वातिरिक्ताऽविद्यापदतत्कार्यजातमादिमध्यावसानेषु दुःखदं भवति हे अनघ तस्मात्सर्वपरित्यज्य निर्विशेषब्रह्माहमस्मीति तत्त्वनिष्ठोभवेद्ब्रह्मविद्वरिष्ठोभवेत्यर्थः ॥ ३५ ॥ ३६ ॥ निर्विशेषब्रह्मज्ञानमहिम्ना तदाप्त्यंतरायतया निद्रादिकं सत्यं मत्वा तन्निरसनपूर्वकं स्वात्मतत्वमाप्तुं यदि मन्यसे सदा नित्यात्मचिंतांद्रावयतीति निद्रा तमोवृत्तिः लोकवार्त्ताच तमउपसर्जनरजोवृत्तिः सर्वानर्थहेतुशब्दादिश्च तमः सत्वोपसर्जनरजोवृत्तिः ब्रह्मभावं विना देहभावस्वात्मविस्मृतिः रजः सत्वोपसर्जनतमोवृत्तिः निद्राद्यात्मविस्मृत्यन्तानां कचिदप्यवसरं न दत्वा स्वात्मानमात्मना अखंडाकारवृत्तिमन्मनसा ब्रह्माहमस्मीति चिंतय स्वाज्ञानावधि सदानुसंधानंकुर्वित्यर्थः ॥ ३७ ॥ ३८ ॥ हे शिष्य त्वं प्रापंचिकसर्वव्यापारमुत्सृज्य स्वांतर्बाह्यव्यापारापवादाधिष्ठानं प्रत्यगभिन्नं ब्रह्मास्मीति भावय । अहंमत्यक् पराविभागैक्यात् सोहंब्रह्मेति निश्चित्य तद्गताहंभावं परित्यज्य ब्रह्ममात्रं भवेत्यर्थः ॥ ३९ ॥ ४० ॥ उपाधिविनिर्मुक्तघटाकाशो महाकाशे विलीयते यथा घटाकाशो महाकाशमात्रंभवति । तथा निरुपाधिकमात्मानं प्रत्यंचं परमात्मनि विलाप्य स्वात्मा परमात्ममात्रमवशिष्यते इत्यखंडभावेन हे मुने सदातूष्णीं भव तूष्णींभूतोस्मीतिवृत्तिंत्यक्त्वा ब्रह्ममात्रंभवेदित्यर्थः ॥ ४१ ॥४२॥

विलाप्याखंडभावेन तूष्णीं भव सदा मुने ॥ ४३ ॥
चिद्धिहास्तीति चिन्मात्रमिदं चिन्मयमेवच ॥ ४२ ॥
चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ ४४ ॥
सत्यचिद्घनमखंडमद्वयं सर्वदृश्यरहितं निरामयम्॥४५॥
यत्पदंविमलमद्वयंशिवं तत्सदाहमिति मौनमाश्रय॥४६॥
जन्ममृत्युसुखदुःखवर्जितं जातिनीतिकुलगोत्रदूरगम्४७

चिद्विवर्त्तजगतोऽस्यकारणं तत्सदाहमिति मौनमाश्रय ॥
पूर्णमद्वयमखंडचेतनं विश्वभेदकलनादिवर्जितम् ॥४९
अद्वितीयपरसंविदात्मकं तत्सदाहमितिमौनमाश्रय ॥

(टीका)इहामुत्रच चिदेवास्ति चिद्विकल्पितमिदंजगच्चिन्मायमे
चिन्मात्रमेव त्वं चाहं चैतेच लोकाश्च चिन्मात्रमिति भावय चिन्मात्रमे
चिन्मात्रमितिश्रुतेः ॥ ४३ ॥ ४४ ॥ अनृतजडप्रपंचाधारत्वात्सत
चिद्घनं जगज्जीवेशादिरूपेण खंडद्वैताभावादखंडमद्वयं घटादिदृश्य
प्रपंचाभावात्सर्वदृश्यरहितं देहत्रयाभावान्निरामयं यत्पदं मुक्तप्राप्
मलवद् द्वैताशिवाभावाद्विमलमद्वयं शिवं तत्सदाहमिति कार
प्राप्तंमौनमाश्रय ॥ ४५ ॥ ४६ ॥ देहत्रयाभावाज्जनिमृतिसुख
दुःखजातिनीतिकुलगोत्रादिकलनातीतं चिदज्ञानविकल्पिताखि
ज्जगत्सत्वे यत्कारणत्वेनाभिमतं यद्वस्तुतः कार्यकारणकलनापन्हव
सिद्धं तदेवसदाहमिति मौनमाश्रय निर्व्यापारो भवेत्यर्थः ॥ ४७ ॥
४८ ॥ सर्वस्यांतर्बहिश्च व्यापकत्वेन पूर्णं द्वैतरूपेण खंडाचेतनाभा
वादद्वयमखंडचेतनं विश्वभेदे सत्यखंडत्वं कुत इत्यत्र विश्वभेदकल
नास्तिनास्तीति विकल्पितवर्जितं अतएव निष्प्रतियोगिकाद्वैतपरमा
नंदबोधस्वरूपं यदवशिष्यते तत्सदाहमिति मौनमाश्रयेत्युक्तार्थः
॥ ४९ ॥ ५० ॥

स्वात्मनोऽन्यतया भातं चराचरमिदं जगत् ॥५१
स्वात्ममात्रतया बुध्वा तदस्मीति विभावय ॥५
विलाप्य विकृतिं कृत्स्नां संभवव्यत्ययक्रमात् ॥५
परिशिष्टं च चिन्मात्रं चिदानंदं विचिंतय ॥ ५

( टीका ) स्वाप्नदशायां यच्चराचरात्मकमिदं जगत्स्वात्म
भिन्नतया भातं स्वप्नदशायां तत्स्वातिरिक्तं नेति स्वात्ममात्रतया बुध्
यत्सर्वविकारापन्हवसिद्धं तदस्मीति विभावय तद्भावनामपि त्य

त्यर्थः॥५१॥५२॥ आत्मन आकाशसंभूत इत्यादिः संभवक्रमः पृथिव्यप्सु प्रलीयत इत्यादि व्यत्ययक्रमः भूतभौतिकं भूतिवैपरीत्येन तद्विकृतिं कृत्स्नां प्रविलाप्य प्रकृतिप्राकृतापन्हवतोयत्परिशिष्यते चिन्मात्रं सच्चिदानंदस्वरूपं तत्त्वमात्रमितिचिंतयेत्यर्थः॥५३॥५४॥

तत्सदितिसार्द्धोत्तिकोपदेशवाक्यानिचतुःपंचाशत्

अथसार्द्धोत्तिकजीवब्रह्मैक्यवाक्यानि

सयश्चायं पुरुषे ॥ १ ॥

यश्चासावादित्यस एकः ॥ २ ॥

सत्यमात्माब्रह्मैव ब्रह्मात्मैवात्रह्येवनविचिकित्स्यं॥४॥

(टीका) आहत्यपंचोत्तरद्विशतं उपदेशमहावाक्यप्रकरणं संपूर्णं उपदेशमहावाक्यजातार्थं यथावदजानतां प्रत्यक्परभेदप्रसक्तौ तन्निराकरणायसार्द्धोत्तिकजीवब्रह्मैक्यवाक्यानि लिख्यन्ते सयश्चेत्यादिना यः सर्वांतरत्वेनप्रसिद्धः सचायं पुरुषे जीववृन्दे प्रत्यक्त्वेन प्रतिष्ठितः यश्चासावादित्यश्चादिरयोपलक्षितदेवताबृंदेच परमात्मतया प्रतिष्ठितः यस्त्वं तत्पदार्थत्वेन जीवेशवृंदे प्रतिष्ठितः सोयमुभावचोपाधिविरल्यादेक एव एकमेवाद्वितीयमितिश्रुतेः॥१॥ ॥२॥३॥ व्यष्टिप्रपंचप्रातिलोम्येनांचनात् प्रत्यगात्मा स एव समष्टिप्रपंचोपबृंहणाद्ब्रह्मैव भवति ब्रह्मात्मैवेति यत्सत्यं न हि संशयोऽस्ति तत्त्वमस्यहं ब्रह्मास्मीतिश्रुतेः ॥ ४ ॥

त्वं ब्रह्मासि ॥ ५ ॥

अहं ब्रह्मास्मि ॥ ६ ॥

आवयोरंतरं न विद्यते त्वमेवाहमहमेव त्वम् ॥ ७ ॥

गताः कलाः पंचदशप्रतिष्ठादेवाश्च सर्वेप्रतिदेवतासु॥८॥

कर्माणिविज्ञानमयश्च आत्मापरेऽव्यये सर्वएकीभवंति॥९॥

येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ॥ १० ॥

स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥ ११ ॥
चतुर्मुखेंद्रदेवेषु मनुष्याश्वगवादिषु ॥ १२ ॥
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्ममय्यपि ॥ १३ ॥

(टीका) हेशिष्य देहत्रयावभासकस्त्वमेव भास्यतासापेक्ष भासकतापाये निर्विशेषं ब्रह्मासि ॥ ५ ॥ हेस्वामिन् भवत्प्रसादाद मत्यभिन्नं ब्रह्मास्मीतिशिष्यानुभवस्यादित्यर्थः ॥ ६ ॥ स्वभक्ति साधनोपायतोवैकुंठगतभक्तं प्रति भगवानेवमाह त्वमिति यस्त्वं भक्तो ऽसि सोऽहं भगवानहमेवत्वमावयोरंतरं न विद्यते ह्यावयोर्भेदहे स्वाज्ञानाभावादित्यर्थः ॥७॥ यस्मिन्निर्विशेषे चिन्मात्रे स्वाज्ञदृष्ट्या स्वाविद्यापादारंभकत्वेन याः प्राणादीनामांतरकलाः पंचदशभेदाः स्वस्वकारणरूपप्रतिष्ठागताः प्रतिष्ठा इति द्वितीयाबहुवचनं श्रोत्रादिज्ञानेंद्रिय पंचकवागादिकर्मेंद्रिय पंचकमनआद्यंतःकरण पंचकभेदभिन्नाः सर्वेदेवाश्च दिग्वातादिप्रतिदेवतासु आगम्यादि कर्माणि विज्ञानमयोजीवः च शब्दाद्विश्वादयोविराडादयो अन्नादयः गृह्यते त एते सर्वे स्वप्रतिष्ठामेत्य स्वस्वोपाधिलयात्परेऽव्यये एकी भवंति निर्विशेषब्रह्मभावं भजंतीत्यर्थः ॥ ८ ॥ ९ ॥ प्रज्ञानं ब्रह्मेति महावाक्यार्थं श्रुतिरेव व्याकरोति येनेति येन चक्षुरादिप्रवृत्तिनिमित्ते नायं लोकः रूपजातमीक्षते शब्दजातं शृणोति गंधजातमिदं जिघ्रति शब्दजातं च व्याकरोति स्वाद्वस्वादुरसभेदं विजानातीतियत्तत्प्र ज्ञानमुदीरितम् ॥ १० ॥ ११ ॥ यतोब्रह्मविष्णुरुद्रेंद्रादिदेवेषु मनु ष्याश्वगवादिपिपीलिकांतेषु च मठकठाहघटशरावाद्यनुगतव्योमैकत्व वत् ब्रह्मादिपिपीलिकांतोपाध्यवच्छिन्नचैतन्यमेकं ब्रह्मैव अतोमय्यपि विद्यमानं प्रज्ञानं ब्रह्मैवेत्यर्थः ॥ १२ ॥ १३ ॥

परिपूर्णः परात्मास्मिन्देहे विद्याधिकारिणि ॥ १४ ॥
बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ १५ ॥

स्वतः पूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः ॥१६॥
अस्मीत्यैक्यपरामर्शात्तेन ब्रह्मभवाम्यहम् ॥ १७ ॥
एकमेवाद्वितीयंसन्नामरूपाविवर्जितम् ॥ १८ ॥
सृष्टेःपुराधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥ १९ ॥
श्रोतुर्देहेंद्रियातीतं वस्त्वत्र त्वंपदेरितम् ॥ २० ॥
एकताग्राह्यतेसीतितदैक्यमनुभूयताम् ॥ २१ ॥
स्वप्रकाशापरोक्षत्वमयमित्युक्तितोमतम् ॥ २२ ॥
अहंकारादिदेहांतात्प्रत्यगात्मेति गीयते ॥ २३ ॥
दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ॥ २४ ॥
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ २५ ॥

( टीका ) अहंब्रह्मास्मीतिश्रुत्यर्थं श्रुतिरेव व्याकरोति परिपूर्ण इतिउच्चावचोपाधिषु व्योमवत्पूर्णः परमात्माब्रह्मविद्याधिकारिणि अस्मिन्स्थूलदेहे तत्रत्यहृदयाकाशगतबुध्युपलक्षितलिंगदेहस्य भावाभावसाक्षितया स्थित्वा सर्वप्रत्यक्त्वेन स्फुरन्नहमितीर्यते अहं शब्देनोच्यत इत्यर्थः अत्र साधनान्तरनैरपेक्ष्येण स्वतः परिपूर्णः परमात्मा तद्रूपेणोपबृंहणाद्ब्रह्मशब्देन वर्णितो भवति प्रत्यगभिन्नं ब्रह्मास्मीति प्रत्यक्ब्रह्मणोरैक्यपरामर्शात्तेनानुसंधानेनाहं ब्रह्मभवामि स्वाज्ञानेन साक्रमब्रह्मत्वस्य निरस्तत्वादित्यर्थः ॥१४॥१५॥१६॥ ॥१७॥ तत्त्वमसीतिश्रुत्यर्थं श्रुतिरेव प्रकाशयति एकमिति सदेवसोम्येदमग्रआसीदिति श्रुतिसिद्धसच्छब्दलक्षितमेकमेवाद्वितीयं सजातीयविजातीयस्वगतभेदविरलं स्वाज्ञारोपितनामरूपविवर्जितं सत् सृष्टेः पुराधुनाप्रलयानंतरमपि तादृक्त्वं उक्तविशेषणविशिष्टनिर्विशेषब्रह्मतत्त्वं तत्पदलक्ष्यमितीर्यते अत्रास्मिंस्तत्त्वमस्यादिवाक्ये

१ स्थूलसूक्ष्मोपाधिष्वित्यर्थः । २ सामग्र्यन्तरनिरपेक्षतया । ३ तत्पदवाच्यकर्मेत्यर्थः ।

सर्ववेदांतार्थश्रोतुरधिकारिणः देहेंद्रियातीतं वस्तु त्वंपदलक्ष्यमिती-
रितं तत्र लक्ष्ययोरस्तीत्येकता एकत्वं ग्राह्यत इतियत्तदैक्यमनुभूयते
तत्वं पदलक्ष्यं प्रत्यगभिन्नं ब्रह्मास्मीत्यनुसंधानं कर्त्तव्यमित्यर्थः
॥१८॥१९॥२०॥२१॥ अयमात्मा ब्रह्मेति श्रुत्यर्थं श्रुतिरेव
विशदयति स्वप्रकाशेति साधनांतरनैरपेक्ष्येण स्वयं प्रकाशतया
परोक्षत्वप्रययमित्युक्तितः श्रुतितः ईरितं अहंकारादिदेहांतप्रपंचात्
प्रातिलोम्येनांचतीति प्रत्यगात्मेति गीयते स्वाज्ञदृष्ट्या दृश्यमानस्य
सर्वस्य जगतः स्वज्ञदृष्ट्या तत्वं सच्चिदानंदलक्षणं ब्रह्मशब्देनेर्यते
तद्ब्रह्म स्वप्रकाशात्मरूपतया अवशिष्यत इत्यर्थः॥२२॥२३॥२४॥२५

मायाविद्ये विहायैवउपाधीपरजीवयोः ॥ २६ ॥
अखंडंसच्चिदानंदं परं ब्रह्म विलक्ष्यते ॥ २७ ॥
सकारः खेचरीप्रोक्तस्त्वं पदं चेतिनिश्चितम् ॥२८॥
हकारः परमेशस्यात्तत्पदं चेतिनिश्चितम् ॥ २९ ॥
सकारोध्यायतेजंतुर्हकारोहिभवेद्ध्रुवम् ॥ ३० ॥
आद्योरातत्पदार्थः स्यान्मकारस्त्वं पदार्थवान् ॥३१॥
तयोः संयोजनमसीत्यर्थेतत्वविदोविदुः ॥ ३२ ॥
नमस्त्वमर्थोविज्ञेयोरामस्तत्पदमुच्यते ॥ ३३ ॥
असीत्यर्थेचतुर्थीस्यादेवं मंत्रेषु योजयेत् ॥ ३४ ॥
क्षीरं क्षीरे यथा क्षिप्तं तैलंतैले जलंजले ॥ ३५ ॥
संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः ॥३६॥
घटे नष्टे यथा व्योम व्योमैव भवति स्वयम् ॥३७॥
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥ ३८ ॥

( टीका ) तत्त्वमर्थयोः परजीवयोरुपाधी मायाविद्ये स्वातिरिक्ते
नेतीतिनिहाय तदुपलक्षितमखंडं सच्चिदानंदं परंब्रह्म विलक्ष्यते

४ वैपरीत्येनेत्यर्थः ।

स्वमात्रमवशिष्यत इत्यर्थः ॥२६॥ २७ ॥ सोऽहं शब्दार्थमाह सकार इति खेचर्या खेचरीयुंजान्निति श्रुत्यनुरोधेन खेचरीबीजं सकारः त्वंपदार्थ इति निश्चितः आकाशशरीरं ब्रह्मेति श्रुतितः हकारोवियद्बीजं तदर्थः परमात्मेतिनिश्चितः सकारार्थोजंतुर्जीवः स्वगतजीवत्वापाये हकारलक्ष्यपरमात्माभवेदितिध्रुवं वास्तवमित्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥ आद्योरेफस्तत्पदलक्ष्यार्थः अपरोमकारस्त्वं पदलक्ष्यार्थः तयोः संयोजनमसिपदार्थः रामशब्देन प्रत्यगभिन्नपरमात्मोच्यत इत्यर्थः ॥ ३१ ॥ ३२ ॥ नमः शब्देन त्वं पदलक्ष्यं राम इतित्र्यक्षरं तत्पदलक्ष्यं ग्रयेतिचतुर्थी असिपदार्थः एवं सप्तकोटिमहामंत्रेषु प्रत्यगभिन्नब्रह्मानुसंधानं समानमित्यर्थः ॥ ३३ ॥ ३४ ॥ यथा क्षीरादिषु क्षीरादियोजनेनैकतांयाति तथा ब्रह्मविन्मुनिर्ब्रह्मैव भवतीत्यर्थः ॥३५॥३६॥यथा घटे नष्टे स्थिते वा कालत्रयेऽपि तद्गतव्योम व्योमैव भवति तथैवोपाधिसत्वासत्वाभ्यां ब्रह्मवित्स्वयं ब्रह्मैव भवतीत्यर्थः नष्टे घटे स्थिते व्योम व्योममात्रं यथाभवेत् उपाधिसत्वासत्वाभ्यां तथाब्रह्मैव विद्भइतिस्मृतेः ॥ ३७ ॥ ३८ ॥ आहत्यवाक्यानिश्चित्वारिंशदुत्तरद्विशतम् ॥ १४३ ॥ जीवब्रह्मैक्यप्रकरणविवरणं संपूर्णम् ॥ ६ ॥

ओंतत्सदितिसार्द्धोक्तिकजीवब्रह्मैक्यवाक्यानष्टत्रिंशत् अथ सार्द्धोक्तिकमननवाक्यानि।

अहमन्नमहमन्नमहमन्नं ॥ १ ॥

अहमन्नादोऽ३हमन्नादोऽ३हमन्नादः ॥ २ ॥

अहं मनुरभवं सूर्यश्च ॥ ३ ॥

अहमेवेदं सर्वमस्मानि ॥ ४ ॥

यथाफेनतरंगादि समुद्रादुत्थितं पुनः ॥ ५ ॥

---

१ स्वस्वरूपतया प्रकाश्यत इति भावः।

समुद्रे लीयते तद्वज्जगन्मय्यनुलीयते ॥ ६ ॥
अनात्मदृष्टेरविवेकनिद्रामहं मम स्वप्नगतिंगतोहम् ॥७॥
स्वरूपसूर्ये भ्युदितेस्फुटोक्तैर्गुरोर्महावाक्यपदैः प्रबुद्धः॥८॥
प्राणाश्चलंतु तद्धर्मैः कामैर्वाहन्यतां मनः ॥ ९ ॥
आनंदबुद्धिपूर्णस्य मम दुःखं कथं भवेत् ॥ १० ॥
नमे बंधो नमे मुक्तिर्नमेशास्त्रं नमे गुरुः ॥ ११ ॥
मायामात्रविकासत्वान्मायातीतोऽहमद्वयः ॥१२॥
आत्मानमंजसा वेद्मि क्वाप्यज्ञानं पलायितम् ॥१३॥
कर्तृत्वमपि मे नष्टं कर्त्तव्यं वापि नक्वचित् ॥ १४ ॥
ब्राह्मण्यं कुलगोत्रे च नामसौंदर्यजातयः ॥ १५ ॥
स्थूलदेहगता ह्येते स्थूलाद्भिन्नस्य मेनहि ॥ १६ ॥
क्षुत्पिपासान्ध्यबाधिर्यकामक्रोधादयोखिलाः ॥१७॥
लिंगदेहगता ह्येते ह्यलिंगस्य न विद्यते ॥ १८ ॥
जडत्वप्रियमोदत्वधर्माः कारणदेहगाः ॥ १९ ॥

(टीका) ॐ प्रत्यक्परैक्यमहावाक्यार्थसंस्कृतब्रह्मविदां ब्रह्मविद्वरताहेतुजीवन्मुक्त्युपायमननप्रकारं वक्तुं मननमहावाक्यान्युच्यन्ते अहमन्नमित्यादिना अद्यत इत्यन्नं अन्नमत्तीत्यन्नादः मम सर्वात्मकेनान्नातृत्वरूपेणाहमेव वर्त्त इत्यर्थः ॥१॥ २ ॥ मन्वादित्यचंद्रतारका अपि मत्तोनभिद्यंत इत्यर्थः ॥ ३ ॥ यतः प्रत्यग्विकल्पितमिदं सर्वं भूतभौतिकजातं अतोऽहमेवेदं सर्व्वमस्मानि भवामीत्यर्थः ॥ ४ ॥ यथासमुद्रात् फेनतरंगादिरुत्थितस्तत्रैव स्थितः कचित्पुनस्तत्रैव लिप्यते तथा मदज्ञानविजृंभितं जगन्मय्येवानुविलिप्यतेऽतोमदतिरिक्तं किंचिदपि नास्तीत्यर्थः ॥ ५ ॥ ६ ॥ देहादावात्मभावारूढस्यानात्मदृष्टेः पुरात्मानात्माविवेकनिद्रामादुर्भूतामहमवष्टभ्य तत्र देहदारादावहं ममेति स्वप्नगतिं गतवानस्मि इदानीं

श्रीगुरोः स्फुटोक्तेस्तत्त्वमस्यहं ब्रह्मास्मीति महावाक्यपदैः स्वरूपसूर्ये निर्विशेषतयाभ्युदिते सति तदा ब्रह्माहमस्मीति प्रबुद्धोस्मीत्यर्थः॥७॥ ॥ ८ ॥ तेषां दशभेदमापन्नानां प्राणानां धर्मैर्निःश्वासोच्छ्वासादि-शोभांतैः प्राणादिधनंजयांतप्राणाश्चलंतु मनश्चाद्यंतःकरणं तु काम-संकल्पादिवृत्तिभिर्वाध्यतां स्वानंदवृध्दिपूर्णस्य मम देहत्रयविल-क्षणात्वेन तत्प्रभवदुःखं कथं भवेदित्यर्थः ॥ ९ ॥१०॥ मम नित्य-मुक्तत्वेन बंधसापेक्षमुक्तिर्नास्ति तत्साधनीभूतगुरुशास्त्रादिकं न मे-ऽस्ति तेषां बंधादीनां मायामात्रविकासत्वाद्यतोहमद्वयोऽतो माया तीतोस्मीत्यर्थः॥११॥१२॥ प्रत्यंचमात्मानं ब्रह्माहमस्मीत्यंजसा वेद्मि पुरानुभूतमपि स्वाज्ञानं क्व पलायितं पुरानुभूतकर्तृत्वमपि मे नष्टं पुरा मम कर्त्तव्यजातं ब्रह्मासीत् इदानीं क्वचिदपि कर्त्तव्यं न विद्यत इत्य-र्थः ॥१३॥ १४ ॥ ब्राह्मणयादिशौद्रांतनानाविधकुलगोत्रनामसौंद-र्यजातिविकारा जायतेऽस्तीत्यादिषड्भावविकाराश्च स्थूलदेहगता भवेयुः स्थूलाद्भिन्नस्य मे ममैते धर्मा नहि विद्यंत इत्यर्थः ॥१५॥१६॥ प्राणेंद्रियांतःकरणगोचरक्षुत्पिपासान्ध्यबाधिर्यकामक्रोधमदमात्सर्या-द्यखिलगुणा लिंगदेहगता भवंति एतेक्षुधादिगुणा ह्यलिंगस्य मम न विद्यंत इत्यर्थः ॥ १७ ॥ १८ ॥ १मूलांतः करणाविद्या बीजभागप्रभवजडत्वप्रियमोदप्रमोदत्वधर्माः कारणदेह गता भवंति नित्यस्य निर्विकारस्वरूपिणोममैते जडत्वादयोधर्मा न हि संतीत्यर्थः ॥ १९ ॥

न संति मम नित्यस्य निर्विकारस्वरूपिणः ॥ २० ॥
चिद्रूपत्वान्नमे जाड्यं सत्यत्वान्नानृतं मम ॥ २१ ॥
आनन्दत्वान्नमे दुःखमज्ञानाद्भाति सत्यवत् ॥ २२ ॥
नाहं देहोजन्ममृत्यू कुतोमे

१ अन्तःकरणवृत्ति तूलाविद्याकपदीजभागप्रभूता जाड्यत्वादयः।

नाहं प्राणः क्षुत्पिपासे कुतोमे ॥ २३ ॥
नाहं चेतः शोकमोहौ कुतोमे
नाहं कर्त्ता बंधमोक्षौ कुतोमे ॥ २४ ॥
आनंदमंतर्निजमाश्रयंत-
माशापिशाचीमवमानयंतम् ॥ २५ ॥
आलोकयंतं जगदिंद्रजाल-
मापत्कथं मां प्रविशेदसंगम् ॥ २६ ॥
देवार्चनस्नानशौचभिक्षादौ वर्त्ततां वपुः ॥ २७ ॥
तारं जपतु वाक्तद्वत्पठत्वाम्नायमस्तकम् ॥ २८ ॥
विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानंदे विलीयताम् ॥ २९ ॥
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥ ३० ॥
ज्ञातं ज्ञातव्यमधुना दृष्टं द्रष्टव्यमद्भुतम् ॥ ३१ ॥
विश्रांतोस्मि चिरं श्रांतश्चिन्मात्रान्नास्ति किंचन ॥ ३२ ॥
नभूतं नभाविष्यं च चिंतयामि कदाचन ॥ ३३ ॥
नस्तौमि नच निंदामि आत्मनोऽन्यं नहि क्वचित् ॥ ३४ ॥
अलेपकोहमजरोनीरागः शान्तवासनः ॥ ३५ ॥
स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ॥ ३६ ॥
नसंति नास्ति माया च तेभ्यश्चाहं विलक्षणः ॥ ३७ ॥
किंकरोमि क्वगच्छामि किंगृह्णामि त्यजामि किं ॥ ३८ ॥
यन्मया पूरितं विश्वं महाकल्पांबुना यथा ॥ ३९ ॥

( टीका )॥२०॥ मम चित्सदानंदरूपत्वाज्जडानृतदुःखं जाति मे न युज्यत इत्यर्थः ॥२१॥२२॥ नाहं स्थूलदेहः मे मम जन्मादिषड्भवविकाराः कुतः, नाहं प्राणोभवामि कुतः मे क्षुत्पिपासे

१ चिद्रूपत्वात् सद्रूपत्वात् आनन्दरूपत्वादित्यर्थः ।

भवेतां, नाहं चेतस्तदाश्रयशोकमोहौ मे कुतः, नाहं कर्त्ता भोक्ता वा भवामि तन्निर्वर्त्यं बंधमोक्षौ कुतोमे भवेतामित्यर्थः ॥२३॥२४॥ स्वांतर्हृदये निजानंदस्वमात्रमित्याश्रयंतमिदं मे स्यादिदं मे स्यादित्युत्थितामाशापिचीं स्वातिरिक्तं नेत्यत्रमानयंतं इदं परिदृश्यमानं जगदिंद्रजालवन्मिथ्येत्यालोकयन्तं इत्थं ब्रह्मभावेन वर्त्तमानं मां सर्वत्रासंगमापत्परंपरा कथं प्रविशेत् कदापि न स्पृशेदित्यर्थः ॥ ॥ २५ ॥ २६ ॥ मद्वपुः शरीरं प्राचीनवासनया स्नानशौचभिक्षादिकर्मणि प्रवर्ततां मम वाक्तु षोडशावयवप्रणवं जपतु तद्ब्वेदमस्तकं वा पठतु मामकी बुद्धिः सर्वव्यापकतया विष्णुं ध्यायतु यद्वा स्वयं ब्रह्मानंदसागरे विरूपविलयं भजतु त्वया किंकृतमित्यत्र स्वातिरिक्तसाक्ष्यसद्भावे तत्साक्ष्यहं स्वयं न किंचिदत्र कुर्वे परैर्वा किंचिदपि न कारये स्वातिरेकेण कर्तुं कारयितुं न किंचिदस्मीत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ यत्स्वमात्रतया ज्ञातव्यं निर्विशेषं ब्रह्म तदधुना ज्ञातं, अपरोक्षतया यद्द्रष्टव्यं तदद्भुतमहमस्मीति दृष्टं स्वाज्ञदशायां स्वातिरिक्तास्तित्वधिया चिरं श्रांतोस्मि इदानीं तु चिन्मात्रान्नास्तिकिंचनेति विश्रांतोस्मि चिन्मात्रमेव चिन्मात्रमित्यादिश्रुतेः ॥ ३१ ॥ ३२ ॥ ब्रह्मातिरेकेण भूतं भविष्यच्च शब्दाद्वर्त्तमानमपि नहि कदाचन चिंतयामि ॥ ३३ ॥ नच कंचन स्तौमि ननिंदामि नहि क्वचिदपि स्वात्मनोऽभ्यधिग्यते सर्वमात्ममयं जगदितिश्रुतेः ॥ ३४ ॥ स्वातिरिक्तप्रपंचसत्वे तत्सत्यंप्रपेणालेपकोहं स्थूलदेहविलक्षत्वादजरोऽस्मि सर्वानर्थहेतुलिंगशरीराभावान्नीरागः शांतवासनोब्रह्मैव भवामीत्यर्थः ॥ ॥ ३५ ॥ स्वमात्रावस्थानलक्षणपूर्णब्रह्मातिरेकेण जगज्जीवेश्वरा-

१ आनन्दांशमेव स्वस्वरूपमित्याकलयन्तम्। २ स्वाविषयकत्वस्वातिरिक्ता विषयकत्वैतदुभयसंम्बन्धेन आनन्दसागरविशिष्टा बुद्धिर्भवत्वित्यर्थः।

दयः साक्षीच माया तत्कार्याणि च न संति तेभ्यश्चाहं विलक्षणः सर्वस्मादन्योविलक्षण इतिश्रुतेः ॥ ३६ ॥ ३७ ॥ यथा महाकल्पांबुना पृथिवी पूरिता तथा यन्मया विश्वोपलक्षिताऽविद्यापद तत्कार्यजातं पूरितं व्याप्तं कवलितमित्यर्थः एवं स्थिते कर्त्तव्यकार्याभावात् किंकरोमि गंतव्यप्रदेशाभावात् क्व गच्छामि विषयसामान्याभावात्किंगृह्णामि किंवा त्यजामि सर्वस्य ब्रह्ममात्रत्वात् नास्ति नास्मेति निश्चिन्वितिश्रुतेः ॥ ३८ ॥ ३९ ॥ आहत्यवाक्यानिषट्‌शीत्युत्तरद्विशतं ॥ २८२ ॥ संपूर्णं ॥

ॐतत्सद्दिति सार्द्धांतिकमननवाक्यान्येकोनचत्वारिंशत्

अथ सार्द्धांतिकजीवन्मुक्तिवाक्यानि स तत्र पर्येति जक्षत्क्रीडन्रममाणःस्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरं ॥ १ ॥

सवा एष एवं पश्यन्नेवं मन्वान एवंविजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानंदः सस्वराड् भवति ॥ २ ॥

( टीका ) मननमहावाक्यसंकृतचिंतानां चतुर्विधजीवन्मुक्तिप्रकटनाय सार्द्धांतिकजीवन्मुक्तिवाक्यानि लिख्यंते स तत्रेत्यादिना य एष श्रवणमननतोब्रह्मभावं गतः सोऽयं ब्रह्मविद्वरीयान्तत्र स्वे महिम्नि विकल्पितसर्वाऽपवादाधारदृष्ट्या पर्येति परि समंतादन्यपरदृष्ट्या यदृच्छया प्राप्तफलं जक्षत् भक्षयन्सर्वत्रात्मात्मीयाभिमतिंवरत्येन स्त्रीभिर्वाक्रीडन् यानैर्वा ज्ञातिभिर्वा वयस्यैः सखिजनैर्वा रममाण इव भाति परारोपितस्त्रीपुरुषोपगे मे जननमृत्यादयतीदं उपजनं शरीराभासमात्मात्मीयाभिमानास्पदतयाऽस्तिनास्तीति न कदापि स्मरेत् ॥ १ ॥ स वा एष ब्रह्मविद्वरीयान् बोधा

१ प्रपञ्चाधिष्ठानरूपेणेत्यर्थः ।

दिसेव्यजडादिभूतिचतुष्टयेष्वात्मावरणं पश्यन् भेदप्रतीतिं मन्वानः अवास्तवं विजानन् सन्निर्विशेषात्मन्येव रतिः रमणं यस्य सोऽयमात्मरतिः आत्मन्येव क्रीडा विनोदो यस्य सोऽयमात्माक्रीडः आत्मैव मिथुनं यस्य सोऽयमात्ममिथुनः बाह्यादारादिरतिः अंधा बधिरा मुग्धाः क्लीबा मूका इति क्रीडावैरल्यादात्ममात्रतया सर्वत्र नंदतीत्यात्मानंदः स विद्वानेवं रूपेण स्वयमेव राजत इति स्वराड् भवति ॥ २ ॥

ते देवाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च ससाधनेभ्योव्युत्थाय निरागारानिष्परिग्रहा अशिखा अयज्ञोपवीता अंधा बधिरा मुग्धाः क्लीबा मूका उन्मत्ता इव परिवर्त्तमानाः शांता दांता उपरतास्तितिक्षवः समाहिता आत्मरतयआत्मक्रीडा आत्ममिथुना आत्मानंदाः प्रणवमेव परं ब्रह्मात्मप्रकाशं शून्यं जानंतस्तत्रैव परिसमाप्ताः ॥ ३ ॥

( टीका ) ये प्रजापतिशिष्यास्तेदेवाः पुत्रकामेष्टिवाणिज्यस्वाश्रमोक्ताचरणलक्षणेभ्यः ससाधनेभ्यः पुत्रवित्तलोकेषणाभ्योव्युत्थाय ससाधनेषणात्रयसन्यासं कृत्वा अनिकेतस्थिरमतयो निरागाराः आधारणमात्रेतरपरिग्रहशून्या निष्परिग्रहाः केशशिखारहिता अशिखाः कार्पासयज्ञोपवीतरहिता अयज्ञोपवीताः ब्रह्मातिरिक्तरूपाग्रहणादंधाः तथा शब्दाग्रहणाद्बधिराः मौढ्यसौंदर्यवैरल्यान्मुग्धाः सद्योजातकन्यायुवतिजरठासु विकाररहिताः क्लीबाः लौकिकवार्ताविरला मूका- उन्मत्ता इव लक्ष्यैकतानचित्ततया परिवर्त्तमाना निगृहीतांतर्बाह्येंद्रियाः शांता दांताः निगृहीत-

१ अनियतस्थितयश्च ते स्थिरमतयः । २ ब्रह्मातिरिक्तशब्दाग्रहणात् ।

स्वांतर्बाह्यव्यापारा उपरताः शीतोष्णादिद्वंद्वसहिष्णवास्तितिक्षवः लक्ष्यैकतानमनसः समाहिताः बाह्यदारादिक्रीडामिथुनजफलकानं दवैरल्यादात्मक्रीडाः आत्ममिथुना आत्मानंदाः व्याख्यातं वैराग्यादिपंचदशमात्रातत्परिणताजाग्रज्जाग्रदाद्यविकल्पानुज्ञैरसांव कलनामलयाधिकरणमणवमेव तुर्यतुर्याभिधानपरं ब्रह्मात्मप्रकाशं ब्रह्ममात्रं तदतिरिक्तं शून्यं जानंतः सततस्तत्रैव तुर्यतुरीयेतन्मात्रा वशेषतया परिसमाप्तास्तद्भावमापन्ना इत्यर्थः ॥ ३ ॥

कुचेलोऽसहायएकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो जीर्णकामो हस्तिनि सिंहे दंशे मशके नकुले सर्पराक्षसगंधर्वेषु मृत्योरूपाणि विदित्वा नबिभेति कुतश्चनेति ॥ ४ ॥ सर्वधर्मान्परित्यज्य निर्ममो निरहंकारोभूत्वा ब्रह्मिष्ठं शरणमुपगम्य तत्त्वमसि सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचनेत्यादिमहावाक्यार्थानुभवज्ञानाद्ब्रह्मैवाहमस्मीति निश्चित्य निर्विकल्पकसमाधिना स्वतंत्रोयतिश्चरति स सन्यासी स मुक्तः स पूज्यः स योगी स परमहंसः सोवधूतः स ब्राह्मण इति ॥ ५ ॥

( टीका ) ब्रह्मवित्पदमारूढः परिव्राट् जीर्णकौपीनकंथाधारणात्कुचेलः स्वदेहातिरिक्तसहायाभावादसहायः अतएवैकाकी विविधविक्षेपग्राससमाधौ स्थितत्वात्समाधिस्थः स्वात्ममात्रविशेषयं कामयत इत्यात्मकामः स्वानाप्तकामनाभावदाप्तकामः इदं मे स्यादिति कामो यस्मान्निर्गतः सोऽयं निष्कामः स्वात्ममात्रज्ञानजठराग्निना जीर्णः कामोयस्य स जीर्णकामः कुचेलाद्यभिमानत्यागपूर्वकं हस्तिसिंहदंशमशकनकुलसर्पराक्षसगन्धर्वादिषु स्वाज्ञानां भयहेतुष्वपि भीहेतुत्वातिरिक्तदृष्टि स्वमात्रज्ञानखड्गेन मारयतीति मृत्युस्तस्य मृत्यो-

जीवः पंचविंशकः स्वकल्पितचतुर्विंशतितत्त्वं षड्विंशकपरमात्माहमिति निश्चयाज्जीवन्मुक्तोभवति ॥६॥ तुरीयमक्षरमिति ज्ञात्वा जागरिते सुषुप्त्यवस्थापन्न इव यद्यच्छ्रुतं यद्यद्दृष्टंतत्सर्वमविज्ञातमिव योवसेत्तस्य स्वप्नावस्थायामपि तादृगवस्था भवति स जीवन् मुक्तोभवति ॥७॥ सकृद्विभातसदानंदानुभवैकगोचरा ब्रह्मवित् विद्वांश्चक्षुरादिबाह्यप्रपंचोपरतः सर्वं जगदात्मत्वेन पश्यन्नात्मेति भावयन् कृतकृत्योभवति ॥ ८ ॥ निर्विशेषचिद्धातोः स्वरूपाणि गजाश्वादीनीतिज्ञान महिम्ना सर्वात्मभावनावान्मुनिर्नि विभेति कुतश्चन भीहेतुर्द्वैतदृष्ट्यभावादित्यर्थः सर्वात्मभावनाजुष्टयोगिर्न सर्वजंतवः स्वात्मत्वेनैव पश्यन्ति न द्विपन्त्यामरूपत इतिस्मृतेः ॥ ४ ॥ परिव्राट् ब्रह्मवित् श्रुतिस्मृतिविहितमतिपिद्धरूपान् करणग्रामनिर्वर्त्तनीयान् सर्वधर्मान् स्वातिरिक्तधिया परित्यज्य दंडकमंडलवादावपि ममेदमित्यभिमानविरलोनिर्ममः देहेंद्रियादौ निरहंकारोभूत्वा ब्रह्मप्रापकतया ब्रह्मिष्ठं स्वाचार्यं शरणमुपगम्य तन्मुखतस्तत्वमसीति परिदृश्यमानं सर्वं ब्रह्मैव खल्विति इह अनानारूपे निर्विशेषे ब्रह्मणि किंचन किंचिदपि नानानास्तीति महावाक्यार्थानुभवज्ञानात् स्वात्मानं ब्रह्मैवाहमस्मीति निश्चित्य निर्विकल्पकसमाधिना विकल्पसामान्यापन्हवसिद्धनिर्विकल्पके ब्रह्मणि समाहितकरणग्रामतया स्वतन्त्रः स्वच्छंदोयतिश्चरति स स्वातिरिक्तसर्वसन्यासी स स्वातिरिक्तकलनामुक्तः मुमुक्षुभिः स पूज्यः स एवास्पर्शयोगी स परमहंसः परिव्राजकः स एव मुख्योवधूतः स ब्राह्मणोब्रह्मविद्वरिष्ठो भवतीत्यर्थः ॥ ५ ॥ पंचविंशतितत्त्वात्मकोजीवः वियदादिपंचकं प्राणादिपंचकं ज्ञानेंद्रियपंचकं कर्मेंद्रियपंचकं अन्तःकरणचतुष्टयं चेतिस्वकल्पितचतुर्विंशतितत्वं परित्य-

ज्य चतुर्विंशतितत्वापवादाधारतया षड्विंशकपरमात्माहमिति निश्च याज्जीवन्मुक्तोभवति ॥ ६ ॥ अवस्थात्रयापवादाधिकरणं तुरीं सदवस्थात्रयवन्नक्षरतीत्यक्षरमिति ज्ञात्वा अच्चरावमतेः पुराजा गरिते यद्यच्छ्रुतं शब्दजातं यद्यद्दृष्टं रूपजातं तत्सर्वं सुषुप्त्यवस्था पन्न इव अविज्ञातमज्ञातमिव योवसेत्तस्य ब्रह्मविदः स्वप्नावस्थाया मपि यादृक् जाग्रत्स्वापः तादृक्स्वातिरिक्तविषयशून्यावस्थायाम भवति येनैवमनुभूयते स जीवन्मुक्तोयोगीति ॥ ७ ॥ सदाया वृत्तित्रयापन्हवतः सकृदेव विभातीति सकृद्विभातः एवं निरावृत्ततया सदास्वानंदानुभवैकगोचरः परमात्मैव ब्रह्मवि विद्वान्परमात्मभावमापन्नः नक्षुरादिकरणनिर्वर्त्य वाह्यांतः प्रपंचो परतोभूत्वा स्वाज्ञदृष्टिविकल्पितं सर्वं जगत्कारणातिरिक्तं का नेतिज्ञानादात्मत्वेन पश्यन् सर्वमात्ममात्रमिति भावयन् कृतकृत्यो जीवन्मुक्तोभवतीत्यर्थः ॥ ८ ॥

निर्द्वंद्वः सदाचंचलगात्रः परमशांतिं स्वीकृत्य नित्यशुद्धः परमात्माहमेवेत्यखंडानंदः पूर्णः कृतार्थः परिपूर्णपरमाकाशमग्नमनाः प्राप्तोन्मन्यवस्थः सन्यस्त सर्वेंद्रियवर्गो अनेकजन्मार्जितपुण्यपुंजपक्वकैवल्यफलो खंडानंदनिरस्तसर्वक्लेशकश्मलो ब्रह्माहमस्मीति कृत कृत्योभवति ॥ ९ ॥

ब्रह्मैवाहमस्मीत्यनवरतं ब्रह्मप्रणवानुसंधानेन य कृतकृत्योभवति सपरमहंसपरिव्राट् ॥ १० ॥

( टीका ) सो यं ब्रह्मविद्वरः शीतोष्णसुखदुःखाद्यभावाभि

१ जाग्रताद्यवस्थात्रयवत् । २ अच्चरावमानात् । ३ जाग्रदवस्थायाम ४ अत्र अवसेदितिसमीचीनः पाठः, निश्चिनुयादित्यर्थः, । ५ सदेवाई त दसदेवासीन्नोसदासीदितित्रयम् । ६ आवरणशून्यतया ।

र्द्वंद्वः सदानिर्विकल्पसमाधिपारवश्यादचंचलगात्रः स्वातिरिक्तांतःकरणाभावात् परमशांतिं स्वीकृत्य शांतप्रपंचोभूत्वा अनित्याशुद्धानात्मवैरल्यान्नित्यशुद्धः परमात्माहमेवेति दृढानुभवान्निष्प्रतियोगिकाखंडानंदः अपूर्णप्रपंचसत्वे पूर्णः स्वकर्तव्यार्थः सर्वत्र परिपूर्णपरमाकाशे यस्य मनोमग्नं समाप्तं स तथोक्तः सदा निर्विकल्पसमाधिरूपायन्मुन्मन्यवस्था येन प्राप्ता स तथोक्तः सर्वेंद्रियवर्गं स्वातिरिक्तं नेति येन सन्यस्तः स सन्यस्तसर्वेन्द्रियवर्गः अनंतकोटिजन्मार्जितपुण्यपुंजपरिपक्वतः संजाततत्वज्ञानफलकैवल्यं येनासादितं स तथोक्तः निष्प्रतियोगिकाखंडानंदानुभवेन स्वातिरिक्तास्तित्वभ्रमभवसर्वक्लेशकश्मलं येन निरस्तम् असुनिर्ब्रह्माहमस्मीति कृतकृत्योजीवन्मुक्तोभवतीत्यर्थः॥९ वैराज्यादिपश्यंत्यंतपंचदशमात्रापरिज्ञातजाग्रज्जाग्रदादितुर्यस्वापांतत्रयध्यारोपापवादाधारविश्वविश्वादितुर्यमायाज्ञाततत्समष्ट्यालेखापवादाधारविराड्विराजादितुर्यविजांततदुभयैक्यारोपापवादाधारोत्राद्यविकल्पानुज्ञैकरसांतकलनापह्नवसिद्धतुर्यातुर्यगोचरब्रह्मप्रणवानुसंधानेन अनवरतं निर्विशेषब्रह्माहमस्मीति तत्वज्ञानमहिम्ना यः कृतकृत्योभवति स परमहंसपरिव्राट् जीवन्मुक्तोभवतीत्यर्थः॥ १० ॥

भावाभावकलाविनिर्मुक्तः सर्वसंशयध्वस्तः
पूर्णाहंभावः कृतकृत्योभवति ॥ ११ ॥
प्राणोद्वेपसर्वभूतैर्विभाति विजानन्विद्वान्
भवतेनातिवादी ॥ १२ ॥
आत्मक्रीड आत्मरतिः क्रियावानेष
ब्रह्मविदां वरिष्ठः ॥ १३ ॥

१ अनेकजन्मार्जितपुण्यपुञ्जपरिपाकात्कैवल्यज्ञानरूपं फलं यस्य स तथोक्तः ।

निमिषार्धं नतिष्ठंति वृत्तिं ब्रह्ममयीं विना ॥१४॥
यथातिष्ठंति ब्रह्माद्याः सनकाद्याः शुकादयः ॥१५॥
अध्यात्मरतिरासीनोनिरपेक्षोनिराशिषः ॥१६॥
सर्वद्वंद्वविनिर्मुक्तोब्रह्मण्येवावतिष्ठते ॥ १७ ॥

( टीका ) निर्विशेषब्रह्मज्ञानयोगी ज्ञानेंद्रियग्राह्यशब्दादिवि-
षयपंचकरूपिणी भावकला अंतःकरणवृत्तितिरभावकला ताभ्यां
विनिर्मुक्तः स्वातिरिक्तदेहादिरहं तद्विलक्षणो जीवोवा तत्सम-
ष्ट्यारोपाधारेश्वरोवा तदपवादाधारपरमात्मावेत्यादिसर्वसंशयध्वस्त
निर्मुक्तसर्वसंशय इत्यर्थः पूर्णब्रह्मभावमापन्नत्वादहमेवेदं सर्वमि-
पूर्णाहंभावारूढः कृतकृत्योजीवन्मुक्तोभवतीत्यर्थः ॥११॥ प्राणस्य
माया इतिश्रुतिनिर्दिष्टद्वितीयमाणशब्दलक्षितः परमात्मैव मायो-
पमकृतः परमात्मा ब्रह्मादिस्तंबांतसर्वभूतैः इत्थंभूतलक्षणो वर्त्ती
तद्भूतमत्यगभिन्नब्रह्मरूपेण विभाति वस्तुतश्चिन्मात्ररूपत्वात् ।
यं विद्वान् यस्तमात्मानमयमहमस्मीति विजानन्नातिवादी भव-
भवति अतीत्यसर्वान्वदितुं शीलमस्येत्यतिवादी अपरब्रह्मवित्
तद्विपरीतः परब्रह्मविद्वांस्तु स्वातिरिक्तवादिनैरल्यात्कानतीत्यवदं
अतोऽयं नातिवादी तूष्णीभूतइत्यर्थः तथाऽचेत् क्रीडारत्यादि
कुत इत्यत आह आत्मेति दारादिनैरपेक्ष्येण स्वात्मन्येव क्रीडा
रतिध्यानादिक्रिया यस्य सोऽयमात्मक्रीडः आत्मरतिक्रियावान्
विद्वान् ब्रह्मविदां वरिष्ठोजीन्मुक्तोभवतीत्यर्थः ॥ १२ ॥ १३
शुकादिब्रह्मर्षयः सनकादिनित्यमुक्ताब्रह्मादिदेवाश्च निमिषंनिमिषा-
वा ब्रह्ममयीं ब्रह्ममात्रवृत्तिं विना यथा न तिष्ठंति तथा ब्रह्मवि-
द्वरीयांसोजीवन्मुक्तास्तिष्ठंतीत्यर्थः ॥ १४ ॥ १५ ॥ योध्यात्म-
शास्त्रसिद्धांतरतिः ब्रह्मवित् सिद्धाद्यासने समासीनः स्वापेक्ष्या
विषयाभावान्निरपेक्षनिर्गतसंकल्पजालोनिराशिषः शीतोष्णादि-

खादिसर्वद्वंद्वैर्विनिर्मुक्तोविद्वान् सो अयं ब्रह्मण्येवावतिष्ठते ब्रह्म-
भावेनैव तिष्ठतीत्यर्थः ॥ १६ ॥ १७ ॥

कपालं वृक्षमूलानि कुचेलान्यसहायता ॥ १८ ॥
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ १९ ॥
स्वप्नेऽपि योहि युक्तः स्याज्जाग्रतीव विशेषतः ॥२०॥
ईदृक्चेष्टः स्मृतः श्रेष्ठोवरिष्ठोब्रह्मवादिनाम् ॥ २१ ॥
निर्मानश्चानहंकारोनिर्द्वंद्वश्छिन्नसंशयः ॥ २२ ॥
आत्मक्रीड आत्मरतिरात्मवान् समदर्शनः ॥ २३ ॥
स्मृत्वा स्पृष्ट्वा च भुक्त्वा च दृष्ट्वाज्ञात्वाशुभाशुभम्२४
न हृष्यति ग्लायतियः स शांत इति कथ्यते ॥२५॥
अप्राप्तं हि परित्यज्य संप्राप्ते समतांगतः ॥ २६ ॥

(टीका) निर्विशेषब्रह्माप्त्युपायतया परिव्राड्भावमापन्नस्य मुनेः किंलक्षणमित्यत्र कपालं जलपात्रं स्वाश्रमोचितदंडधारणं च निवासाय वृक्षमूलानि शीतनिवारणाय कापायधातुरंजितकुचेलानि कंथाकौपीनादीनि संगभिया असहायतासर्वत्र नामरूपविप्रमग्नासच्चिदानंदब्रह्मभावनया समताचैवेतज्जीवन्मुक्तस्य लक्षणम् ॥ १८ ॥ १९ ॥ यथा जाग्रदवस्थायां निर्विशेषं ब्रह्माहमिति समाहितचित्तोभवति तथा योहि स्वप्ने युक्तः स्यात् सोयमीदृक्चेष्टो मुनिर्ब्रह्माहमस्मीति जाग्रत्स्वप्नयोर्मननशीलः ब्रह्मवादिनां श्रेष्ठो-वरिष्ठश्च भवतीत्यर्थः ॥ २० ॥ २१ ॥ ब्रह्मविद्वरोयोगी मानापमानराहित्यान्निर्मानश्च देहादावहंभाववैरल्यान्निरहंकारः शीतोष्णादिद्वंद्वातीतत्वान्निर्द्वंद्वः अहंब्रह्मैवेत्यवधारणाच्छिन्नसंशयः स्वातिरिक्तवनिताद्यभावादात्मक्रीडः आत्मरतिः प्रत्यगात्माभिन्नपरमात्माहमस्मीत्यात्मवान् सर्वत्र समदर्शनोजीवन्मुक्तोभवतीत्यर्थः ॥ २२ ॥ २३ ॥ श्रेयोरूपं शुभं अश्रेयरूपं अशुभं च स्वातिरिक्तं

(टीका ) यतोवाचोनिवर्तन्त इतिश्रुत्यनुरोधेन वाग्मान- वृत्तीनामतीतब्रह्मैव विषयो यस्य स वाचामतीतविषयः विषयासक्त- स्यात्तथात्वं कथमित्यत आह विषयेति ब्रह्ममात्रविषयाश्रितः पुं- सांसारिकविषयाशादशा येनोज्झिता स तथोक्तः अस्खलितब्रह्म- दृष्टित्वात् विषयानंदवैमुख्यपूर्वकं परानंदरसास्वादनतोविषयानं- मत्यन्तुब्धचित्तोभवति सोयं विद्वान् आत्मनाऽखंडाकारवृत्तिमदं- करणेन स्वात्मनि स्वे महिम्नि रमते रतिहेतुदाराद्यभावादित्यर्थः ॥ ३६ ॥ ३७ ॥ ब्रह्मविष्णुरुद्रग्रंथयोव्यष्टिसमष्टिशपंचदशग्रं- ग्रंथयोवा यस्मान्निर्गताः सोऽयं निर्ग्रंथिः अहमहं वानवेति संदेहो- स्य शांतः स शांतसंदेहः विगतस्वातिरिक्तभावनोविभावनः भाव- सामान्यभावे निर्माणं नाशमेतीत्यत्राह अनिर्वाण इति नाशवद्बु- धिवैरल्यात् चित्रार्पितरूपोपि जीवन्मुक्तोभवतीत्यर्थः ॥ ३८ ॥ ३९ सांसारिकतुष्टिहेतुधनादिहीनोपि स्वात्मनिजेपाप्सा सदैव तु- स्वातिरिक्तसहायशून्योऽपि महाबलः योगिनः सहायशून्यत- लोकवदभुंजानोऽपि ब्रह्मामृतरसास्वादान्नित्यतृप्तः स्वातिरिक्त- चासमोपि सर्वत्र समदर्शनः नित्यादिकर्मकुर्वन्नपि अकर्तास्मि- किंचिदप्यकुर्वाणश्च भवति परदृष्ट्या प्रारब्धकर्माभासफलभोग- अयं स्वदृष्ट्या भोक्ता न भवति एष योगिलोकवत्परिच्छिन्नशरी- प्यऽशरीरि सर्वगतोभवति सदापरमद्वैताख्याध्यात्मशास्त्ररतिः स्व- महिम्न्यासीनः सर्वत्र परिपूर्णः सदा ब्रह्माहमस्मीति पावनमान- जीवन्मुक्तोभवतीत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४

नैष्कर्म्येण नतस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः॥४५

न समाधानजाप्याभ्यां यस्य निर्वासनं मनः॥४६

जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ॥ ४७

न तत्पश्यति चिद्रूपं ब्रह्मवस्त्वेव पश्यति ॥४८

अहमन्नं सदान्नाद इति हि ब्रह्मवेदनम् ॥ ४९ ॥
ब्रह्मविद्ग्रसति ज्ञानात्सर्वं ब्रह्मात्मनैव तु ॥ ५० ॥
समाधिमथकर्माणि माकरोतु करोतु वा ॥ ५१ ॥
हृदयेनात्तसर्वेहो मुक्त एवोत्तमाशयः ॥ ५२ ॥

(टीका) यस्य ब्रह्मनिष्ठस्य मनोनिर्वासनं भवति तस्य श्रुतिस्मृत्युक्तनित्यादिकर्मभिर्नार्थः प्रयोजनमस्ति कर्मसामान्यं यतोनिर्गतं तन्निष्कर्म तद्भावोनैष्कर्म्यं तेन नैष्कर्म्येण सन्यासेनापि नार्थोस्ति मनोनास्तीतिधिया तत्समाधानं तन्निग्रहः प्रणवादिजाप्यं च, ताभ्यां समाधानजाप्याभ्यामपि नहि प्रयोजनमस्ति जीवन्मुक्तस्य स्वातिरिक्तसर्वापन्हवसिद्धब्रह्ममात्रदृष्टित्वात् कर्मतत्सन्यासतारादिजपसमाधिभिः प्रयोजनाभावादित्यर्थः ॥ ४५ ॥ ४६ ॥ सर्वस्मात्परमात्मानं स्वमात्रतया वेत्तीति परमात्मवित् ब्रह्मविद्वरः प्रातिभासिकदृष्ट्या स्वातिरिक्तप्रपंचजातं जगज्जीवेशादिरूपेण पश्यन्नपि नहि तत्तथा पश्यति किंतु जगज्जीवेशादिकलनाकलितं जगच्चिद्रूपब्रह्मातिरिक्तं न किंचिदस्तीति ब्रह्मवस्त्वेव पश्यति ब्रह्मातिरिक्तस्य मृग्यत्वादित्यर्थः ॥ ४७ ॥ ४८ ॥ स्वातिरिक्ततया यदविद्यमानं तदविद्यापदमन्नमुच्यते तस्यापि स्वानतिरिक्तत्वादहमन्नं अपन्होतव्यस्वातिरिक्ताभासाहंब्रह्मविद्वरीयान् सदान्नादोभवामि इत्येव ब्रह्म वेद चिन्मयमिति ब्रह्मविद्वरीयान् सम्यग् ज्ञानात्सर्वं तु ब्रह्मात्मनैव ग्रसति एवं ग्रसित्वा स्वमात्रमेव शिष्यत इत्यर्थः ॥ ४९ ॥ ५० ॥ ब्रह्मविद्वरीयान् हृदयेनात्तसर्वेहः स्वयदृच्छया कदाचित्समाधिनाथवा श्रुतिस्मृत्युक्तकर्माणि करोतु कदापि माकरोतु वा सर्वथोत्तमाशयोमुनिः ब्रह्ममात्रभावारूढोजीवन्मुक्तोवा ब्रह्ममात्रावस्थानलक्षणविदेहमुक्तोवा भवतीत्यर्थः ॥ ५१ ॥ ५२ ॥

अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबंधनात् ॥ ५३ ॥

भयं कामापूरणसंजातः क्रोधः इदं मेस्यादित्यभिलाषः स्वातिरिक्त-स्तित्वज्ञानी कृपणस्तद्भावः कार्पण्यं एवं हर्षादिकार्पण्यांतद्द्वि-भिर्विधिवशात् मासाभिः सविपर्ययाभिर्वा कदापि न हृष्यति। जीवन्मुक्त इत्युच्यते इत्यर्थः ॥ ६२ ॥ ६३ ॥ देहत्रयतदुपयोगि-कौपीनाच्छादनभिक्षादावपि लीलयाहंकारममकारमयीं वासनां नि-शेषतस्त्यक्त्वा स्वातिरिक्तध्यातृध्यानादित्रिपुटीत्यागी यस्तिष्ठति सजीवन्मुक्त उच्यते ॥ ६४ ॥ ६५ ॥ प्रपंचासंभवज्ञानं मौ-तद्वान्निर्विशेषब्रह्मज्ञानी देहत्रयेऽपि निरहंभावः मानावमानवैरल्यादि-र्मानः येन केन चोद्देशेन हृष्यर्पितदृढक्रोधोमत्सरोयस्मान्निर्मुक्त-समुक्तमत्सरः गतोद्वेगः संकल्पशून्यःसन् देहधारणमात्रोपयोगि-भिक्षादिकर्म यः करोति सोऽयं मुनिर्जीवन्मुक्त उच्यते ॥ ६६ ॥ ६७ ॥ स्वाज्ञततिविकल्पितेयं स्वाविद्यापदतत्कार्यरूपिणी यावद्-दृश्यकलना सत्यत्वेन व्यावहारिकत्वेन वा विलोक्यते सा सं-सम्यग्ज्ञानिना सुष्ठु संत्यक्ता सम्यगपन्हवतो गता भवति स जीव-न्मुक्तोब्रह्मविद्वरिष्ठ उच्यत इत्यर्थः ॥ ६८ ॥ ६९ ॥

उद्वेगानंदरहितः समया स्वच्छया धिया ॥ ७० ॥
न शोचते न चोदेति स जीवन्मुक्त उच्यते ॥ ७१ ॥
सर्वेच्छाः सकलाः शंकाः सर्वेहाः सर्वनिश्चयाः ॥ ७२ ॥
धिया येन परित्यक्ता स जीवन्मुक्त उच्यते ॥ ७३ ॥
जन्मस्थितिविनाशेषु सोदयास्तमयेषु च ॥ ७४ ॥
सममेव मनोयस्य स जीवन्मुक्त उच्यते ॥ ७५ ॥
सर्वाधिष्ठानचिन्मात्रं निर्विकल्पे चिदात्मनि ॥ ७६ ॥
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ॥ ७७ ॥
क्रियानाशाद्भवेच्चिंता नाशोस्माद्वासनाक्षयः ॥ ७८ ॥
वासनाप्रक्षयोमोक्षः स जीवन्मुक्त उच्यते ॥ ७९ ॥

(टीका) यो यं ब्रह्मविद्वरः स्वाभिलपितविपयालाभजः क्रोध उद्वेगः स्वाभिलपितविपयलाभज आनंदः स्वातिरिक्तं न किंचिदस्तीतिसमया स्वच्छया धिया क्रोधात्मकोद्वेगानंदवृत्तिविरलः सन् तल्लाभालाभतो न शोचते नचोदेति विपादं हर्पं वा न याति शोकहर्पहेतुः स्वान्तःकरणाभावात्सोऽयमचितोजीवन्मुक्तो भवतीत्यर्थः ॥ ७० ॥ ७१ ॥ इदं मे स्यादिदं मे स्यादित्यप्राप्त वस्तुविपयकाः सर्वेच्छाः यावत्यः इदमिदं वा नवेति संशयविपयाः सकलाः शंकाः प्राप्तव्यवस्तुनि पुनर्भोगेच्छारूपाः सर्वेहः देह एवाहं जीवोऽहमीश्वरोऽहं ब्रह्माहमित्येवमाकाराः सर्वे निश्चया येन ब्रह्मविद्वरीयसा ब्रह्माकारपरिणतया धिया ब्रह्मातिरिक्तं न किंचिदस्तीति परित्यक्ता मिथ्यात्वेनालोकिता भवंति सजीवन्मुक्त उच्यत इत्यर्थः ॥ ७२ ॥ ७३ ॥ यस्य ब्रह्मविद्वरीयसः स्वपरयोरुदयास्तमयाभ्यां सहितेपु सोदयास्तमयेषु जन्मस्थितिविनाशेषु चशब्दात् कारणीभूतपुण्यपापेष्वपि भवितव्यं भवत्येवेति सर्वं ब्रह्मेति च मनः सममेव भवति समानमन्यत् ॥ ७४ ॥ ७५ ॥ अविद्विकल्पशतजुष्टसर्वप्रपंचारोपापवादाधिष्ठानचिन्मात्रे सर्वविकल्पग्रासनिर्विकल्पके चिदात्मनि स्वगात्रतया साक्षात्कृते सत्यथ सर्वत्रगत स्नेहः सन् यो जीवति सर्वेषु भूतेषु नश्यत्स्वपि सर्वात्मतयाऽवतिष्ठते समानमन्यत् ॥ ७६ ॥ ७७ ॥ फलेच्छया क्रियत इति क्रिया तत्फलेच्छाभावात् क्रियानाशोभवति स्वकर्त्तव्याभावतया क्रियानाशात्तत्फलचिंतापि नाशमेति अस्माचिंतानाशात्तद्धेतुवासनाक्षयो भवति सर्वानर्थभूतवासनाप्रक्षयाधारोमोक्ष इति योजानाति स जीवन्मुक्त उच्यते ॥ ७८ ॥ ७९ ॥

निर्विकल्पो च चिन्मात्रवृत्तिः प्रज्ञेति कथ्यते ॥८०॥
सा सर्वदा भवेद्यस्य स जीवन्मुक्त उच्यते ॥८१॥

तत्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥ ५४ ॥
योविलंघ्याश्रमान्वर्णानात्मन्येव स्थितः पुमान् ॥५५॥
अतिवर्णाश्रमी योगी अवधूतः स कथ्यते ॥५६॥

यथा रविः सर्वरसान् प्रभुङ्क्ते
हुताशनश्चापि हि सर्वभक्षः ॥ ५७ ॥
तथैव योगी विषयान् प्रभुङ्क्ते
न लिप्यते पुण्यपापैश्च शुद्धः ॥ ५८ ॥

( टीका ) ब्रह्ममात्रपदारूढोमुख्यावधूतोऽपि जीव इतिचेत्र अवधूतशब्दार्थप्रकाशकहेतुचतुष्टयसत्वादवधूतोब्रह्मविद्वरिष्ठस्तथाहि आद्यवर्णार्थहेतुरक्षरत्वादिति क्षराक्षरप्रपंचापन्हवासिद्धपरमाक्षरत्वात् द्वितीयवर्णार्थहेतुर्वरेण्यत्वादिति ब्रह्मविद्वरिष्ठस्यात्रशेषतया वरणीयरूपत्वात् तृतीयवर्णार्थहेतुर्धूतसंसारबंधनादिति स्वातिरिक्तहेतोरपन्हवचिकृतसंसारबंधनत्वात् चतुर्थवर्णार्थहेतुस्तत्वमस्यादिलक्ष्यत्वादिति समष्टिव्यष्टिप्रपंचारोपापवादाधारशिवजीवपरप्रत्यक्प्रविभक्तवाच्यलक्ष्यैक्यांशापन्हवमुखेन यत्स्वमात्रतया लक्ष्यते ज्ञायते तद्धि तत्वमस्यादिलक्ष्यं तद्भावस्तस्मान्मुख्यावधूतः परमात्मा ब्रह्मविद्वरिष्ठो न जीव इत्यर्थः स्वकल्पितानेकभिदा प्रपंचोनदृश्योयत्र पराक्षरं तत् ज्ञात्वा स्वमात्रं परमाद्वयं योमुख्यावधूतः सहि चित्स्वरूप इतिस्मृतेः ॥ ५३ ॥ ५४ ॥ परिव्राट् पदमारूढोविद्वान् स्वातिरिक्तधिया विकल्पित वर्णाब्रह्मचर्याद्याश्रमद्रविडगौडप्रविभक्तनानाजातितद्धर्मानपि विलंघ्यातिक्रम्य यः पुमानात्मन्येव स्वे महिम्नि सदास्थितो भवति सोतिवर्णाश्रमी वर्णाश्रमाचारातीतोयोगी गौणावधूतोजीवन्मुक्तो भवति स्वातिरिक्तवर्णाश्रमकल्पनापूर्वकं तदतीतोस्मीति ध्यारूढत्वात् गौणत्वं युज्यत इत्यर्थः ॥५५॥५६॥ यथा रविः सूर्यः साध्यसाधुविषयगतसर्वरसान् भुङ्क्ते

यथा हुताशनोऽग्निश्च स्वदिसेंधनादिकं भक्षयतीति सर्वभक्षोभवति च शब्दाद्वायुः सर्वरसान् शोषयति यथा रव्यग्निवायवो न लिप्यन्ते तथैवायं योगी रव्यादिवद्विशुद्धः सन् स्वकरणग्रामग्राह्यविषयान् भुङ्क्ते स्वातिरिक्तविषयजातं नेति ग्रसित्वा तद्गतपुण्यपापैश्च न लिप्यते लेपालेपहेतुस्वातिरिक्तविषयैरल्पादित्यर्थः ॥५७॥५८॥

केवलं सुसमः स्वच्छो मौनी मुदितमानसः ॥५९॥
संतोषामृतपानेन ये शांतास्तृप्तिमागताः ॥६०॥
आत्मारामा महात्मानस्ते महापदमागताः ॥६१॥
हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ॥ ६२ ॥
न हृष्यति ग्लायति यः स जीवन्मुक्त उच्यते॥६३॥
अहंकारमयीं त्यक्त्वा वासनां लीलयैव यः ॥६४॥
तिष्ठति ध्येयसंत्यागी स जीवन्मुक्त उच्यते ॥६५॥
मौनवान्निरहंभावो निर्मानो मुक्तमत्सरः ॥६६॥
यः करोति गतोद्वेगः स जीवन्मुक्त उच्यते ॥६७॥
यावती दृश्यकलना सकलेयं विलोक्यते ॥६८॥
सा येन सुष्ठुसंत्यक्ता स जीवन्मुक्त उच्यते ॥६९॥

( टीका ) विद्वरः स्वातिरिक्तममुदितमानसः सदा संतुष्टचित्तोमौनी प्रत्यग्भावारूढतयातिस्वच्छहृदयः विशेषसामान्यविरलं केवलं ब्रह्मस्वमात्रमिति ज्ञात्वा सुसमः साम्यब्रह्मभावमापन्नोजीवन्मुक्तोभवतीत्यर्थः ये ब्रह्मविद्वराः स्वातिरिक्तप्रपंचशांताः संतः निर्विशेषं ब्रह्म स्वमात्रमित्यवगतिमंजातेन निर्विशेषब्रह्मानंदामृतपानेन नित्यतृप्तिमागता दारादिनैरपेक्ष्येणात्मन्येव रमन्त इति स्वात्मारामा भवन्ति ते महात्मानः निर्विशेषचिन्मात्राभूत्वा महापदं महत्पदं ब्रह्म ब्रह्मविद्वरिष्ठत्वं वा गता भवन्तीर्थः ॥ ५९॥६० ॥ ॥ ६१ ॥ स्वेप्सितविषयलाभजोहर्षः विषयालाभजोऽमर्षः द्वैतजं

भयं कामापूरणसंजातः क्रोधः इदं मेस्यादित्यभिलापः स्वातिरिक्त स्तित्वज्ञानी कृपणस्तद्भावः कार्पण्यं एवं हर्षादिकार्पण्यांतद्दृष्टि भिर्विधिवशात् प्राप्ताभिः सविपर्ययाभिर्वा कदापि न हृष्यति जीवन्मुक्त इत्युच्यते इत्यर्थः ॥ ६२ ॥ ६३ ॥ देहत्रयतदुपयोगि कौपीनाच्छादनभिक्षादावपि लीलयाहंकारममकारमयीं वासनां नि शेषतस्त्यक्त्वा स्वातिरिक्तध्यातृध्यानादित्रिपुटीत्यागी यस्तिष्ठ सजीवन्मुक्त उच्यते ॥ ६४ ॥ ६५ ॥ प्रपंचासंभवज्ञानं मौ तद्वान्निर्विशेषब्रह्मज्ञानी देहत्रयेऽपि निरहंभावः मानावमानवैरल्या मानः येन केन चोद्देशेन हृद्यर्पितदृढक्रोधोमत्सरोयस्मान्निर्मुक्त समुक्तमत्सरः गतोद्वेगः संकल्पशून्यःसन् देहधारणमात्रोपयोगि भिक्षादिकर्म यः करोति सोऽयं मुनिर्जीवन्मुक्त उच्यते ॥ ६६ ॥ ६७ ॥ स्वाज्ञततिविकल्पितेयं स्वाविद्यापदतत्कार्यरूपिणी याव दृश्यकलना सत्यत्वेन व्यावहारिकत्वेन वा विलोक्यते सा सं सम्यग्ज्ञानिना सुष्टु संत्यक्ता सम्यगपन्हवतो गता भवति स जीव न्मुक्तोब्रह्मविद्वरिष्ठ उच्यत इत्यर्थः ॥ ६८ ॥ ६९ ॥

उद्वेगानंदरहितः समया स्वच्छया धिया ॥ ७० ॥
न शोचते न चोदेति स जीवन्मुक्त उच्यते ॥ ७१ ॥
सर्वेच्छाः सकलाः शंकाः सर्वेहाः सर्वनिश्चयाः॥ ७२ ॥
धिया येन परित्यक्ता स जीवन्मुक्त उच्यते ॥ ७३ ॥
जन्मस्थितिविनाशेषु सोदयास्तमयेषु च ॥ ७४ ॥
सममेव मनोयस्य स जीवन्मुक्त उच्यते ॥ ७५ ॥
सर्वाधिष्ठानचिन्मात्रं निर्विकल्पे चिदात्मनि ॥ ७६ ॥
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ॥ ७७ ॥
क्रियानाशाद्भवेच्चिंता नाशोस्माद्वासनाक्षयः ॥ ७८ ॥
वासनाप्रक्षयोमोक्षः स जीवन्मुक्त उच्यते ॥ ७९ ॥

(टीका) यो यं ब्रह्मविद्वरः स्वाभिलषितविषयालाभजः क्रोध उद्वेगः स्वाभिलषितविषयलाभज आनंदः स्वातिरिक्तं न किंचिदस्तीतिसमया स्वच्छया धिया क्रोधात्मकोद्वेगानंदवृत्तिविरलः सन् तल्लाभालाभतो न शोचते नचोदेति विषादं हर्षं वा न याति शोकहर्षहेतुः स्वान्तःकरणाभावात्सोऽयमचितोजीवन्मुक्तो भवतीत्यर्थः ॥ ७० ॥ ७१ ॥ इदं मे स्यादिदं मे स्यादित्यप्राप्तवस्तुविषयकाः सर्वेच्छाः यावत्यः इदमिदं वा नवेति संशयविषयाः सकलाः शंकाः प्राप्तव्यवस्तुनि पुनर्भोगेच्छारूपाः सर्वेहः देह एवाहं जीवोऽहमीश्वरोऽहं ब्रह्माहमित्येवमाकाराः सर्वे निश्चया येन ब्रह्मविद्वरीयसा ब्रह्माकारपरिणतया धिया ब्रह्मातिरिक्तं न किंचिदस्तीति परित्यक्ता मिथ्यात्वेनालोकिता भवंति सजीवन्मुक्त उच्यत इत्यर्थः ॥ ७२ ॥ ७३ ॥ यस्य ब्रह्मविद्वरीयसः स्वपरयोरुदयास्तमयाभ्यां सहितेषु सोदयास्तमयेषु जन्मस्थितिविनाशेषु चशब्दात् कारणीभूतपुण्यपापेष्वपि भवितव्यं भवत्येवेति सर्वं ब्रह्मेति च मनः सममेव भवति समानमन्यत् ॥ ७४ ॥ ७५ ॥ अविद्विकल्पशतजुष्टसर्वप्रपंचारोपापवादाधिष्ठानचिन्मात्रे सर्वविकल्पग्रासनिर्विकल्पके चिदात्मनि स्वपात्रतया साक्षात्कृते सत्यथ सर्वत्रगत स्नेहः सन् यो जीवति सर्वेषु भूतेषु नश्यत्स्वपि सर्वात्मतयाऽवतिष्ठते समानमन्यत् ॥ ७६ ॥ ७७ ॥ फलेच्छया क्रियत इति क्रिया तत्फलेच्छाभावात् क्रियानाशोभवति स्वकर्त्तव्याभावतया क्रियानाशात्तत्फलचितापि नाशमेति अस्माचितानाशात्तद्धेतुवासनाक्षयो भवति सर्वानर्थभूतवासनाप्रक्षयाधारोमोक्ष इति योजानाति स जीवन्मुक्त उच्यते ॥ ७८ ॥ ७९ ॥

निर्विकल्पा च चिन्मात्रवृत्तिः प्रज्ञेति कथ्यते ॥८०॥
सा सर्वदा भवेद्यस्य स जीवन्मुक्त उच्यते ॥८१॥

देहेन्द्रियेष्वहंभाव इदंभावस्तदन्यके ॥ ८२ ॥
यस्य नो भवतः क्वापि स जीवन्मुक्त उच्यते॥८

न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः ॥ ८४॥
प्रज्ञया यो विजानाति स जीवन्मुक्त उच्यते॥८

साधुभिः पूज्यमानोऽपि पीड्यमानोऽपि दुर्जनैः॥८
समभेव भवेद्यस्य स जीवन्मुक्त उच्यते ॥ ८७ ॥

यथास्थितमिदं यस्य व्यवहारवतोपि च ॥ ८८ ॥
अस्तंगतं स्थितं व्योम स जीवन्मुक्त उच्यते॥८

( टीका ) स्वाज्ञविकल्पितस्वातिरिक्तप्रपंचगतनानाविकल्प सनिर्विकल्पा च सा चिन्मात्रगोचरवृत्तिरेव ब्रह्मात्मगोचरप्रज्ञे कथ्यते यस्य योगिनः सर्वदा सा प्रज्ञा भवेत् स जीवन्मुक्त उच्य ॥८०॥८१॥ स्थूलोऽहं कृशोऽहं शृणोमि पश्यामीत्यादिदेहेंद्रिये अहंभावः तदन्यके क्षेत्रदारादाविदंभावस्तावुभावपि क्वापि कचिद यस्य नो भवतः सोऽयं मुनिर्जीवन्मुक्त उच्यते ॥ ८२ ॥ ८३ व्यष्टिप्रपंचास्पदं प्रत्यक्समष्टिप्रपंचास्पदं ब्रह्म तयोर्भेदमाधाराधे योर्ब्रह्मसर्गयोः आधाराधेयता कार्यकारणता भास्यभासकता वास्ति नास्तीति कथापि कथां च प्रज्ञया यो न विजानाति स जीवन्मुक्त उच्यते ॥८४॥८५॥ ब्रह्मवित्तरः साधुजनैरीश्वरधिया पूजितोऽपि दुर्जनैर्भ्रांतोऽयमिति ताडितोपि पूजकताडकतत्कर्मादिकं सर्व ब्रह्मेतिधिया यस्य चित्तं समभेव भवेत् स जीवन्मुक्त उच्यते ॥८६॥ ॥ ८७ ॥ यस्य प्रत्यगभिन्नब्रह्मभावापन्नस्य निर्विकल्पसमाधिभा जोव्यवहारवतोपि वा समाहितव्यवहारदशयोरपि घटशरावादि स्थितमस्तंगतं वा तदवच्छिन्नव्योमवदिदं ब्रह्मतत्वं स्वाज्ञादिदृष्टि मोहे सत्यसति यथास्थितं भवति स जीवन्मुक्त उच्यते ॥८८॥८९॥

नोदेति नास्तमायाति सुखे दुःखे मनःप्रभा ॥९०॥
यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥९१॥
योजागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ॥९२॥
यस्य निर्वासनोबोधः स जीवन्मुक्त उच्यते ॥९३॥
रागद्वेषभयादीनामनुरूपं चरन्नपि ॥ ९४ ॥
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥९५॥
यस्य नाहंकृतोभावो बुद्धिर्यस्य न लिप्यते ॥९६॥
कुर्वतोऽकुर्वतोवापि स जीवन्मुक्त उच्यते ॥९७॥
यस्मान्नोद्विजते लोकोलोकान्नो द्विजते च यः ॥९८॥
हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ ९९ ॥

(टीका) यस्य ब्रह्मविद्वरस्य मनःप्रभा प्रसन्नता सुखाभासोदये नोदेति नाधिकविकासतामेति दुःखाभासोदयेपि नास्तं वैवर्ण्यमायाति ब्रह्मातिरिक्तं न किंचिदस्तीति[1] यथा प्राप्तस्थितिर्भवेत् सोयं तादृशमनःप्रसादवान् जीवन्मुक्त उच्यते ॥ ९०॥९१ ॥ यः प्रत्यक्प्रवणात्मना द्वैतसामान्यस्फुरणसुषुप्तौ तिष्ठतीति सुषुप्तिस्थोऽपि रागादिकरणाप्रसवत्स्वयं सुषुप्तिं नैति किंतु जागर्ति सुखमहमस्वाप्समिति प्रतीतिदर्शनात् तर्हींद्रियैरिंद्रियार्थग्रहणलक्षणजागरणमस्य विद्यत इत्यत्राह यस्येति यस्य निरवस्थस्य जाग्रत् तदुपलक्षितावस्थात्रयमपि न विद्यत यस्य बोधनिर्वासनोबोधः अवस्थात्रयविकारविरलोभवति स जीवन्मुक्त उच्यते॥९२॥९३॥ स्वाभिलषितविषयस्पृहारागस्तदलाभजोद्वेषः द्वैतजं भयं कामाद्यरिषड्वर्ग आदिशब्दार्थः परदृष्ट्या रागादितत्तद्वृत्त्यनुरूपं चरन्नपि योयं मुनिर्घटशरावांतस्थव्योमवत् अतिस्वच्छरूपोभवति स जीवन्मुक्त उच्यते ॥ ९४ ॥ ९५ ॥ यस्य निर्विशेषब्रह्मविदः

१ ब्रह्मव्यतिरिक्तस्य वस्तुनोऽभावादिति नियमात् ।

साध्वसाधुकर्म कुर्वतोऽकुर्वतोवाऽपि देहाद्यवष्टंभेनाहमिदं साध्व साधु कर्म करोमीत्यहंकृतोभावोन विद्यते यस्य बुद्धिः पुष्करपत्रस्थजलबिंदुवत्कर्मणि तत्फले तदन्यत्र वा न लिप्यते सोऽयं मुनिः स जीवन्मुक्त उच्यते ॥ ९६ ॥ ९७ ॥ यस्माद्योगिनः सकाशादेतल्लोकोनोद्विजते योलोकादपि नोद्विजते ब्रह्मविद्वरस्य सर्वात्मारामतया स्वस्मात्परस्य परस्मात्स्वस्य वा नोद्वेगः संभवति यः स्वभावतोहर्षामर्षभयोन्मुक्तः कुत्रापि हर्षविषादभयशून्योभवति स जीवन्मुक्त उच्यते ॥ ९८ ॥ ९९ ॥

यः समस्तार्थजालेषु व्यवहार्यपि शीतलः ॥१००॥
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥१०१॥
प्रजहाति यदा कामान् सर्वान् चित्तगतान्मुने १०२
मयि सर्वात्मके तुष्टः स जीवन्मुक्त उच्यते॥१०३॥
चैत्यवर्जितचिन्मात्रे पदे परमपावने ॥ १०४ ॥
अक्षुब्धचित्तोविश्रान्तः स जीवन्मुक्त उच्यते १०५
इदं जगदयं सोऽयं दृश्यजातमवास्तवम् ॥ १०६ ॥
यस्य चित्ते न स्फुरति स जीवन्मुक्त उच्यते॥१०७
शांतसंसारकलनः कलावानपि निष्कलः ॥ १०८ ॥
यः सचित्तोपि निश्चित्तः स जीवन्मुक्त उच्यते १०९

( टीका ) यथा परस्त्वाज्ञास्वविकल्पितशब्दाद्यर्थेषु मुहुर्मुहुर्व्यवहरन् भ्रांतचित्तो भवति परिच्छिन्नदेहात्मदृष्टित्वात् वधा योऽयं तु ब्रह्मविद्वरीयान् समस्तकरणाभासग्राह्यार्थाभासजाले देहधारणमात्रोपयोगितया व्यवहार्यपि स्वात्मात्मीयाज्ञानतापाभावाच्छीतलः परिशांतांतरोभूत्वा यन्मया पूरितं विश्वं महाकल्पेनुना यथतिश्रुत्यनुरोधेन सर्वत्र परिपूर्णात्मा भवति स जीवन्मुक्त उच्यते ॥ १०० ॥ १०१ ॥ हे मुने स्तूपे यदा यस्मिन्काले

कामाभासप्रसक्तिर्भवेत्तदा चित्तगतान् सर्वान् कामान् प्रजहाति स्वातिरिक्तकामजाततद्धेतुचित्तादिकं नास्तीति मयि सर्वात्मके प्रत्यगभिन्नपरमात्मनि यस्तुष्टः स्वानंदभरितोभवति स जीवन्मुक्त उच्यते ॥ १०२ ॥ १०३ ॥ चेतोवृत्तिविकल्पितविषयजातं चैत्यं तदपवादाधिकरणतया तद्वर्जिताचिन्मात्रे ब्रह्मविद्वरिष्ठैरात्मतया सेवनीयपरमपावने पदे त्रिपादस्यामृतन्दिवीति श्रुतिसिद्धनिर्विशेषत्रिपदि योऽन्तुब्धचित्तः सन् विश्रान्तोभवति स जीवन्मुक्त उच्यते ॥ १०४ ॥ १०५ ॥ इदं परिदृश्यमानं नामरूपात्मकं जगत् अयमन्यः सोऽहमेवंविधः अयं मे पिता इयं मे मातेत्याद्यवास्तवं दृश्यजातं यस्य ब्रह्मविद्वरीयसश्चित्ते कदापि न स्फुरति स जीवन्मुक्त उच्यते ॥ १०६ ॥ १०७ ॥ यः स्वदृष्ट्या संशांतजननमरणपरंपरारूपसंसारकलनोभवति यः स्वान्यदृष्ट्या षोडशकलाविकारदेहवान् चित्तवानपि मायादिनामांतषोडशकलाभावान्निष्कलः स्वांतःकरणवैरल्यान्निश्चित्तोभवति स जीवन्मुक्त उच्यते ॥ १०८ ॥ १०९ ॥

चिदात्माहं परात्माहं निर्गुणोऽहं परात्परः ॥११०॥
आत्ममात्रेण यस्तिष्ठेत्स जीवन्मुक्त उच्यते ॥१११॥
देहत्रयातिरिक्तोऽहं शुद्धचैतन्यमस्म्यहम् ॥ ११२ ॥
ब्रह्माहमिति यस्यांतः स जीवन्मुक्त उच्यते ॥११३॥
यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः॥११४॥
परमानंदपूर्णोयः स जीवन्मुक्त उच्यते ॥ ११५ ॥
नित्यानंदः प्रसन्नात्मा ह्यन्यचिंताविवर्जितः ॥११६॥
किंचिदस्तित्वहीनोयः स जीवन्मुक्त उच्यते ॥११७॥
अहं ब्रह्मास्म्यहं ब्रह्मास्म्यहं ब्रह्मेति निश्चयः ॥११८॥
चिदहं चिदहं चेति स जीवन्मुक्त उच्यते ॥११९॥

( टीका ) अखिलव्यष्टिप्रपंचापवादाधारतया चिदात्माहं तत्समष्टिप्रपंचादपि परत्वेन विभानात् परमात्मागुणत्रयापवादाधारान्निर्गुणोऽहं परस्मात्साक्षिणोपि परत्वेन विभानात् परात्परोऽहमिति स्वविकल्पितानात्मापन्हवसिद्धात्ममात्रेण यः सदा तिष्ठति स जीवन्मुक्त उच्यते ॥ ११० ॥ १११ ॥ देहत्रयातिरिक्तोऽहं स्थूलादिदेहत्रयापवादाधारप्रत्यग्रूपत्वात् शुद्धचैतन्यमस्म्यहमशुद्धप्रपंचापवादाधारशुद्धचैतन्यत्वात्,यस्यांतर्हृदये ब्रह्माहमस्मीत्यखंडाकारवृत्तिः सदा स्फुरति स जीवन्मुक्त उच्यते ॥ ११२ ॥ ११३ ॥ यस्य देहादिकं देहादित्वेन नास्ति यस्य देहादिप्रपंचजातं ब्रह्मेतिनिश्चयो भवति यः परमानंदपरिपूर्णस्वांतोभवति स जीवन्मुक्त उच्यते ॥ ११४ ॥ ११५ ॥ अनित्यदुःखाभावान्नित्यानंदः अपरोक्षीकृतस्वात्मत्वात् भ्रमशात्मा स्वातिरेकेणान्यदस्तीत्यन्यचिंताविवर्जितः प्रातिभासिकरूपेण वा किंचिदस्ति नास्तीति विभ्रमहीनोभवति शब्दः स्वातिरिक्तासंभवद्योतकः स जीवन्मुक्त उच्यते॥११६॥ ११७ ॥ योऽहं प्रत्यग्रूपचिदात्मा सोऽहं परं ब्रह्मास्मीत्यर्थः अहं ब्रह्म चिदहमिति योन्वहं भावयति स जीवन्मुक्त उच्यते इत्युक्तार्थवृत्तिराद्दरार्थो ॥ ११८ ॥ ११९ ॥ आहत्यवाक्यान्येकाधिकचतुःशतं ॥ ४०१ ॥ जीवन्मुक्तिप्रकरणविवरणं संपूर्णम् ॥ ८ ॥ जीवन्मुक्तिमहावाक्यजातार्थलब्धजीवन्मुक्तिपदारूढानां स्वानुभवं प्रकटयितुं जीवन्मुक्तिवाक्यान्येकोनविंशत्यधिकशतम् ॥

ॐ तत्सदितिसार्द्धोत्तिकजीवन्मुक्तिवाक्यान्येकोनविंशत्यधिकशतम् ॥

अथ सार्द्धोत्तिकस्वानुभूतिवाक्यानि

योसावसौ पुरुषः सोहमस्मि ॥ १ ॥

तद्योऽहं सोऽसौ योऽसौ सोऽहम् ॥ २ ॥
मां शांतमचलमद्वयानंदचिद्घन एवास्मि ॥ ३ ॥
तत्पूर्णानंदैकबोधस्तद्ब्रह्मैवाहमस्मि ॥ ४ ॥
त्वंवाहमस्मि भगवो देवतेऽहंवै त्वमसि ॥ ५ ॥
सच्चिदानंदात्मकोऽहमजोऽहं परिपूर्णोऽहमस्मि ॥६॥
शुद्धाद्वैतब्रह्माहम् ॥ ७ ॥
वाचामगोचरनिराकारपरब्रह्मस्वरूपोऽहमेव ॥ ८ ॥

(टीका) अथ साद्वीतकस्वानुभूतिमहावाक्यानि लिख्यंते योऽसावित्यादिना योऽसौ विश्वारोपाधारेश्वरात्मनावस्थितः सोऽसौ क्षराक्षरप्रपंचापवादाधारः पुरुषः पुरुषोत्तमो भवति यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इतिस्मृतेः यः पुरुषोत्तमत्वेन विख्यातः सोऽहमस्मि भवामीत्यर्थः ॥१॥ तत्र देहे योऽहं भ्रमात्मा भायोऽध्यात्मं सोऽसावादित्यमंडलाभिमानी नान्यः योऽसावादित्ये पुरुषोवर्त्तते नाऽहं स एवाहं नान्योऽस्मि पुरुषादित्यगतप्रत्यक्परहेयांशापायसिद्धचैतन्यस्यैकत्वात् स यश्चाऽयं पुरुषे यश्चासावादित्ये स एक इतिश्रुतेः ॥ २ ॥ यः प्रत्यगभिन्नपरमात्मतया तत्त्वमस्यादिमहावाक्यप्रतिपादितः तं मां प्रत्यक्परविभागैक्यगतविशेषांशशांतं कूटस्थरूपादचलं ब्रह्मविदो जानंति अहं तु द्वैतदुःखजडप्रपंचापन्हवसिद्धनिष्प्रतियोगिकानंदचिद्घन एवास्मिनान्य इत्यर्थः ॥ ३ ॥ यत्तत्पदलक्ष्यपरिपूर्णानंदैकबोधरूपेणावशिष्यते तत्तादृग्विधं ब्रह्मैवाहमस्मि ब्रह्मातिरिक्तवस्त्वन्तराभावादित्यर्थः ॥ ४ ॥ हेभगवो भगवति सन्मात्ररूपिणी देवते त्वमेवाहमस्मि अहमेव त्वमसि प्रत्यक्पररूपयोरावयोरंतरं नविद्यत इत्यर्थः ॥ ५ ॥ अनृतप्रपंचग्रासं तत्जडप्रपंचग्रासरूपिणी चित्तदुःखप्रपंचग्रास आनंदश्च आत्मा स्वरूपं यस्य सच्चिदानंदात्मकोऽहं स्वस्मा-

आनंदाब्धिर्यःस्परः सोऽहमस्मि
प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ २० ॥

(टीका) लोकत्रयदेहत्रयावस्थात्रयगुणत्रयात्मसु त्रिषु धामसु यज्ज्ञोज्यादिनानाविधत्रिपुटीरूपं भवेत्तेभ्यस्त्रिधामतज्ज्ञोज्यादित्रिपुटीविकारेभ्योविलक्षणः साक्षी स्वातिरिक्तसाक्ष्यभासकत्वाच्चिन्मात्रोऽहं सदा कैवल्यरूपेण स्थितत्वात्सदाशिवोऽस्मि ॥ ११ ॥ १२ ॥ जगत्कारणभावमाप्ते मय्येव सकलं षोडशकला तत्कार्यजगज्जातरज्जुसर्पवत् कल्पितं यावत् स्वज्ञानं मयि सर्वं प्रतिष्ठितयज्ञाति मद्व्यतिरिक्तं न किंचिदस्तीति श्रुतिसिद्धसन्मात्रज्ञानान्मयि सर्वं लयं याति यद्द्वैतमपंचारोपापवादास्पदं तद्ब्रह्माद्वयमस्म्यहं ॥१३॥१४॥ नित्यमोक्षस्वरूपत्वान्निर्वाणरूपोऽस्मि मनोवृत्तिसामान्याभावान्निरीहोऽस्मि जगज्जीवेशादिविभागाभावान्निरंशरूपोऽस्मि इच्छाविषयीभूतद्वैताभावान्निरीप्सितोऽस्मि अचिदनात्माभावाच्चिदात्मरूपोऽस्मि अविभक्तचतुष्पदत्वान्निरंशरूपोऽस्मि॥१५॥ शिवजीवाभिधानपरापरकलनाविहीनोऽस्मि॥१६॥ यदीशाद्यष्टोत्तरशतमनेकेषांतोऽसत्यविरतमगुणेन स्वेनैव वेद्यं तद्ब्रह्मैवाहमस्मि व्योमवातादिपंचमहाभूतभौतिकरूपवेद्यमहं न भवामि । अनृतजडदुःखात्मकनामरूपकर्मगुणात्मपंचापवादाधारतया सच्चिदानंदरूपं ब्रह्मैवाहमस्मि ॥ १७ ॥ १८ ॥ नित्यं शुद्धोबुद्धमुक्त इतिचतुष्टयं तत्पर इत्यस्मिन्वाक्ये व्याख्यातं स्वेनैव भवति स्वभावः पारमार्थिकत्वात्सत्यः सूक्ष्मवृत्त्यनुगमात्सूक्ष्मः सत्तारूपेण विम्बाकाशानुगमात्सद्विभुश्चास्मि द्वैतप्रपंचाभावादद्वितीयोऽस्मि अपरिच्छिन्नानंदरूपत्वादानंदाब्धिरस्मि यदितिर्लिंगव्यत्ययः यः पराक्प्रपंचप्रातिलोम्येनांचतीति प्रत्यक्तत्वासौ प्रपंचाधारोधातुश्च प्रत्यग्धातुः प्रत्यगभिन्नपरमात्मा भवति सोहपरः परमात्मास्मीत्यत्र न संशीतिः संशयोस्ति ॥ १९ ॥ २० ॥

तयोऽहं सोऽसौ योऽसौ सोऽहम् ॥ २ ॥
तं शांतमचलमद्वयानंदचिद्घन एवास्मि ॥ ३ ॥
तत्पूर्णानंदैकबोधस्तद्ब्रह्मैवाहमस्मि ॥ ४ ॥
त्वंवाहमस्मि भगवो देवतेऽहंवै त्वमसि ॥ ५ ॥
सच्चिदानंदात्मकोऽहमजोऽहं परिपूर्णोऽहमस्मि ॥६॥
शुद्धाद्वैतब्रह्माहम् ॥ ७ ॥
वाचामगोचरनिराकारपरब्रह्मस्वरूपोऽहमेव ॥ ८ ॥

(टीका) अथ सार्द्धांतिकस्वानुभूतिमहावाक्यानि लिख्यंते योऽसावित्यादिना योऽसौ विश्वारोपाधारेश्वरात्मनावस्थितः सोऽसौ क्षराक्षरप्रपंचापवादाधारः पुरुषः पुरुषोत्तमो भवति यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इतिस्मृतेः यः पुरुषोत्तमत्वेन विख्यातः सोऽहमस्मि भवामीत्यर्थः ॥१॥ तत्तत्र देहे योऽहं प्रज्ञात्मा भासोऽध्यात्मं सोऽसावादित्यमंडलाभिमानी नान्यः योऽसावादित्ये पुरुषोवर्त्तते सोऽहं स एवाहं नान्योऽस्मि पुरुषादित्यगतप्रत्यक्परदेवांशापावच्छिन्नचैतन्यस्यैकत्वात् स यश्चायं पुरुषे यश्चासावादित्ये स एक इतिश्रुतेः ॥ २ ॥ यः प्रत्यगभिन्नपरमात्मतया तत्त्वमस्यादिमहावाक्यप्रतिपादितः तं मां प्रत्यक्परविभागैक्यगतविशेषांशशांतं कूटस्थरूपादचलं ब्रह्मविदोजानंति अहं तु द्वैतदुःखजडप्रपंचापन्हवसिद्धनिष्प्रतियोगिकानंदचिद्घन एवास्मिनान्य इत्यर्थः ॥ ३ ॥ यत्तत्पदलक्ष्यपरिपूर्णानंदैकबोधरूपेणावशिष्यते तत्ताद्दग्विधं ब्रह्मैवाहमस्मि ब्रह्मातिरिक्तवस्त्वन्तराभावादित्यर्थः ॥ ४ ॥ हेभगवो भगवति सन्मात्ररूपिणी देवते त्वमेवाहमस्मि अहमेव त्वमसि प्रत्यक्परस्वरूपयोरावयोरंतरं नविद्यत इत्यर्थः ॥ ५ ॥ अनृतप्रपंचग्रासं अतुजडप्रपंचग्रासरूपिणी चिद्दुःखप्रपंचग्रास आनंदब्रह्मात्मा स्वरूपं यस्य सच्चिदानंदात्मकोऽहं स्वस्मा-

आनंदाब्धिर्यत्परः सोऽहमस्मि
प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ २० ॥

( टीका ) लोकत्रयदेहत्रयावस्थात्रयगुणत्रयात्मसु त्रिषु धामसु यज्ञोज्यादिनानाविधत्रिपुटीरूपं भवेत्तेभ्यस्त्रिधागतज्ञोज्यादित्रिपुटीविकारेभ्यो विलक्षणः साक्षी स्वातिरिक्तसाक्ष्यभासकत्वाच्चिन्मात्रोऽहं सदा कैवल्यरूपेण स्थितत्वात्सदाशिवोऽस्मि ॥ ११ ॥ १२ ॥ जगत्कारणभावमापन्ने मय्येव सकलं षोडशकला तत्कार्यजगज्जातरज्जुसर्पवत् कल्पितं यावत् स्वज्ञानं मयि सर्वं प्रतिष्ठितवद्भाति मद्व्यतिरिक्तं न किंचिदस्तीति श्रुतिसिद्धमन्यात्वज्ञानान्मयि सर्वं लयं याति यद्द्वैतप्रपंचारोपापवादास्पदं तद्ब्रह्माद्वयमस्म्यहं ॥ १३ ॥ १४ ॥ नित्यमोक्षस्वरूपत्वान्निर्वाणरूपोऽस्मि मनोवृत्तिसामान्याभावान्निरीहोऽस्मि जगज्जीवेशादिविभागाभावान्निरंशरूपोऽस्मि इच्छाविषयीभूतसंवेद्याभावान्निरीप्सितोऽस्मि अचिदनात्माभावाच्चिदात्मरूपोऽस्मि अविभक्तचतुष्पदत्वान्निरंशरूपोऽस्मि ॥ १५ ॥ शिवजीवाभिधानपरापरकलनाविहीनोऽस्मि ॥ १६ ॥ यदीशाष्टोत्तरशतमर्त्यवेदांततोऽतन्निरसनमुखेन स्वेनैव वेद्यं तद्ब्रह्मैवाहमस्मि व्योमवातादिपंचमहाभूतभौतिकरूपवेद्यमहं न भवामि । अनृतजडदुःखात्मकनामरूपकर्मजन्यप्रपंचापवादाधारतया सच्चिदानंदरूपं ब्रह्मैवाहमस्मि ॥ १७ ॥ १८ ॥ नित्यं शुद्धबुद्धमुक्त इतिचतुष्टयं तत्पर इत्यस्मिन्वाक्ये व्याख्यातं स्वेनैव भवति स्वभावः पारमार्थिकत्वात्सत्यः सूक्ष्मबुध्यनुगमात्सूक्ष्मः सत्तारूपेण विम्बाकाशानुगमात्सद्विभुश्चास्मि द्वैतप्रपंचाभावादद्वितीयोऽस्मि अपरिच्छिन्नानंदरूपत्वादानंदाब्धिरस्मि यदितिलिंगव्यत्ययः यः पराक्प्रपंचप्रातिलोम्येनांचतीति प्रत्यक्सचासौ प्रपंचाधारो धातुश्च प्रत्यग्धातुः प्रत्यगभिन्नपरमात्मा भवति सोऽहपरः परमात्मास्मीत्यत्र न संशीतिः संशयोऽस्ति ॥ १९ ॥ २० ॥

सोऽहमर्कः परंज्योतिरर्कज्योतिरहं शिवः ॥ २१ ॥
आत्मज्योतिरहं शुक्रः सर्वज्योतिरसावहोम् ॥२२॥
द्वैतभावविमुक्तोऽस्मि सच्चिदानंदलक्षणः ॥ २३ ॥
शुद्धबोधस्वरूपोऽहं केवलोऽहं सदाशिवः ॥ २४ ॥
निष्क्रियोऽस्म्यविकारोऽस्मि निर्गुणोऽस्मि निराकृतिः २५॥
निर्विकल्पोऽस्मि नित्योऽस्मि निरालंबोऽस्मि निर्द्वयः २६॥
केवलाखंडबोधोऽहं स्वानंदोऽहं निरंतरः ॥ २७ ॥
सत्यं ज्ञानमनंतं यत्परं ब्रह्माहमेव तत् ॥ २८ ॥
केवलं चित्सदानंदं ब्रह्मैवाहं जनार्दनः ॥ २९ ॥
अशुभाशुभसंकल्पैः संशांतोऽस्मि निरामयः ॥३०॥

( टीका ) योऽर्कादिस्थूलप्रपंचावभासकपरंज्योतीरूपश्चिदर्कः सोऽहं चिदर्कज्योतिः शिवश्चाहं शुक्रः स्वच्छः सत्यमात्मज्योतिरहमसौ ॐकारार्थविश्वविश्वाद्यविकल्पानुज्ञैकरसांतः सर्वज्योतिः परायणातुर्यतुर्योऽहं ॥ २१॥२२ ॥ द्वैतभावविमुक्तोऽस्मि अद्वैतत्वात् सच्चिदानंदलक्षणः अनृतजडदुःखप्रपंचापवादाधारत्वात् अत एव शुद्धबोधस्वरूपोऽहं कार्यकारणनिर्मुक्तपूर्णबोधस्वरूपत्वात् केवलोऽहं अशेषविशेषाभावात् स्वातिरिक्ताशिवप्रहाणात्सदाशिवोऽहं ॥२३॥ ॥२४॥क्रियाकारकाभावान्निष्क्रियोऽस्मि विकाराभावादविकारोऽस्मि गुणत्रयाभावान्निर्गुणोऽस्मि निरुपाधिकत्वान्निराकृतिरस्मि नानाविकल्पाभावान्निर्विकल्पोऽस्मि अनित्यप्रपंचाभावान्नित्योऽस्मि ॥२५॥ स्वातिरिक्तसर्वालंबनाभावान्निरालंबोऽस्मि द्वयरहितत्वान्निर्द्वयः ॥२६॥ केवलनिर्विशेषाखंडबोधोऽहं निरंतरस्वानंदोऽहं असत्याज्ञानपरिच्छेदत्रयाभावात्सत्यज्ञानानंतरूपं तत्परं ब्रह्माहमेव ॥२७॥ ॥ २८ ॥ केवलनिर्विशेषचिद्ब्रह्मानंदघनोऽहं भजज्जनजन्मनाशादर्दयतीति जनार्दनोऽहं अनुचितोचितस्मरणशुभाशुभसंकल्पजालसंशांतोऽस्मि स्थूलदेहाभावान्निरामयोऽस्मि ॥ २९ ॥ ३० ॥

च्छुक्तोऽस्मि स्वातिरिक्तत: शांतोऽस्मि ध्रुवत्वात् शाश्वतोऽस्मि परमकल्याणकैवल्यरूपत्वाच्छिवोस्मि ॥ ४७॥४८ ॥ सदावाप्तिभयाभावादहं सकृद्विभातोऽस्मि सर्वदा स्वे महिम्नि स्थितोऽस्मि अनृतजडदुःखप्रपंचाभावान्निष्प्रतियोगिकसच्चिदानंदमात्रोऽहं स्वं प्रकाशरूपत्वेन चिद्घनोऽस्मि ॥ ४९॥५० ॥ देहाभिमानाभावा न्मानावमानहीनोऽस्मि निर्गुणत्वाच्छिवोऽस्मि योऽद्वैतादिद्वंद्वकलनाहीनः सोऽहमस्मि ॥ ५१ ॥ ५२ ॥

भावाभावविहीनोऽस्मि भासाहीनोऽस्मि भास्म्यहम् ॥
शून्याशून्यविहीनोऽस्मि शोभनाशोभनोऽस्म्यहम् ॥५४
सदसद्भेदहीनोऽस्मि संकल्परहितोऽस्म्यहम् ॥ ५५ ॥
नानात्मभेदहीनोऽस्मि ह्यखंडानंदविग्रहः ॥ ५६ ॥
पंचकोशविहीनोऽस्मि शुद्धं ब्रह्मास्मि सोऽस्म्यहम् ॥५
चित्तादिसर्वहीनोऽस्मि परमोऽस्मि परात्परः ॥ ५८
सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम्॥
ध्यातृध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम्॥
लक्ष्यालक्ष्यविहीनोऽस्मि लयहीनरसोऽस्म्यहम् ॥ ६१
मातृमानविहीनोऽस्मि मेयहीनः शिवोऽस्म्यहं ॥ ६२

(टीका) स्वातिरिक्तकलनास्तिनास्तीति प्रतीत्यभावाद्भावाभावविहीनोस्मि रागादिकरणाभावाद्भाषाहीनोऽस्मि स्वमात्रभास्म्य अवस्थात्रयाभावात् शून्याशून्यविहीनोऽस्मि शून्यं सुषुप्तिराम्नाव शून्यं जाग्रदादिकमिति चंद्रिकोक्तेः स्वातिरिक्तनिवृत्तिप्रवृत्त्यभावा शोभनाशोभनोऽस्म्यहं ॥ ५३॥५४ ॥ स्थूलसूक्ष्मप्रपंचकलना वात्सदसद्भेदहीनोस्मि अमनस्करूपत्वात्संकल्परहितोऽस्म्यहम् एक स्यावशेषत्वान्नानात्मभेदहीनोऽस्मि अपरिच्छिन्नानंदमात्रत्वादख

१ द्वैताद्वैतविहीनोऽस्मि द्वंद्वहीनोऽस्मीत्यनयोर्वाक्ययोर्योगेनेयं टीकाकृद्व्याख्

सोऽहमर्कः परंज्योतिरर्कज्योतिरहं शिवः ॥ २१ ॥
आत्मज्योतिरहं शुक्रः सर्वज्योतिरसावहोम् ॥२२॥
द्वैतभावविमुक्तोऽस्मि सच्चिदानंदलक्षणः ॥ २३ ॥
शुद्धबोधस्वरूपोऽहं केवलोऽहं सदाशिवः ॥ २४ ॥
निष्क्रियोस्म्यविकारोऽस्मि निर्गुणोऽस्मि निराकृतिः २५॥
निर्विकल्पोऽस्मि नित्योऽस्मि निरालंबोऽस्मि निर्द्वयः२६॥
केवलाखंडबोधोहं स्वानंदोहं निरंतरः ॥ २७ ॥
सत्यं ज्ञानमनंतं यत्परं ब्रह्माहमेव तद् ॥ २८ ॥
केवलं चित्सदानंदं ब्रह्मैवाहं जनार्दनः ॥ २९ ॥
अशुभाशुभसंकल्पैः संशांतोऽस्मि निरामयः ॥३०॥

( टीका ) योऽर्कादिस्थूलप्रपंचावभासकपरंज्योतीरूपश्चिदर्कः सोऽहं चिदर्कज्योतिः शिवश्चाहं शुक्रः स्वच्छः प्रत्यगात्मज्योतिरहमसौ ॐकारार्थविश्वविश्वाद्यविकल्पानुज्ञैकरसांतः सर्वज्योतिः परायणातुर्यंतुर्योहं ॥ २१॥२२ ॥ द्वैतभावविमुक्तोऽस्मि अद्वैतत्वात् सच्चिदानंदलक्षणः अनृतजडदुःखप्रपंचापवादाधारत्वात् अत एव शुद्धबोधस्वरूपोऽहं कार्यकारणनिर्मुक्तपूर्णबोधस्वरूपत्वात् केवलोऽहं अशेषविशेषाभावात् स्वातिरिक्ताशिवप्रहाणात्सदाशिवोऽहं ॥२३॥ ।२४॥क्रियाकारकाभावान्निष्क्रियोऽस्मि विकाराभावादविकारोऽस्मि गुणत्रयाभावान्निर्गुणोऽस्मि निरुपाधिकत्वान्निराकृतिरस्मि नानाविकल्पाभावान्निर्विकल्पोऽस्मि अनित्यप्रपंचाभावान्नित्योस्मि ॥२५॥ स्वातिरिक्तप्रतीकालंबनाभावान्निरालंबोस्मि द्वयराहित्यान्निर्द्वयः ॥२६॥ केवलनिर्विशेषखंडबोधोऽहं निरंतरस्वानंदोऽहं असत्याज्ञानपरिच्छेदत्रयाभावात्सत्यज्ञानानंतरूपं तत्परं ब्रह्माहमेव ॥२७॥ ॥ २८ ॥ केवलनिर्विशेषचिद्बोधानंदघनोहं भजज्जनजन्मनाशावर्दयतीति जनार्दनोहं मद्व्यतिनिवृत्यात्मकशुभाशुभसंकल्पजालसंशांतोऽस्मि स्थूलदेहाभावान्निरामयोऽस्मि ॥ २९ ॥ ३० ॥

न्मुक्तोऽस्मि स्वातिरिक्ततः शांतोऽस्मि ध्रुवत्वात् शाश्वतोऽस्मि परमकल्याणकैवल्यरूपत्वाच्छिवोऽस्मि ॥ ४७॥४८ ॥ सदाव्याहृतित्रयाभावादहं भर्गाद्विभातोऽस्मि सर्वदा स्वे महिम्नि स्थितोऽस्मि अनृतजडदुःखप्रपंचाभावात्प्रतियोगिकसच्चिदानंदमात्रोऽहं स्वांप्रकाशरूपत्वेन चिद्घनोऽस्मि ॥ ४९॥५० ॥ देहाभिमानाभावान्मानावमानहीनोऽस्मि निर्गुणत्वाच्छिवोऽस्मि योऽहं तादि द्वंद्वकल्पनाहीनः सोऽहमस्मि ॥ ५१ ॥ ५२ ॥

भावाभावविहीनोऽस्मि भासा हीनोऽस्मि भास्म्यहम् ।
शून्याशून्यविहीनोऽस्मि शोभनाशोभनोऽस्म्यहम् ॥५४
सदसद्भेदहीनोऽस्मि संकल्परहितोऽस्म्यहम् ॥ ५५ ॥
नानात्मभेदहीनोऽस्मि ह्यखंडानंदविग्रहः ॥ ५६ ॥
बंधमोक्षविहीनोऽस्मि शुद्धं ब्रह्मास्मि सोऽस्म्यहम् ॥५७
चित्तादिसर्वहीनोऽस्मि परोऽस्मि परात्परः ॥ ५८ ॥
सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम् ॥
ध्यातृध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम् ॥
लक्ष्यालक्ष्यविहीनोऽस्मि लयहीनरसोऽस्म्यहम् ॥ ६१
मातृमानविहीनोऽस्मि मेयहीनः शिवोऽस्म्यहं ॥ ६२

( टीका ) स्वातिरिक्तकलनाऽस्ति नास्तीति प्रतीत्यभावाद्भावाभावविहीनोऽस्मि वागादिकरणाभावाद्भाषाहीनोऽस्मि स्वमात्रभास्यअवस्थात्रयाभावात् शून्याशून्यविहीनोऽस्मि शून्यं सुषुप्तिरास्ते शून्यं जाग्रदादिकमिति श्रुतिक्रोक्तेः स्वातिरिक्तनिष्टानिष्टत्वाभावात् शोभनाशोभनोऽस्म्यहं ॥ ५३॥५४ ॥ स्थूलसूक्ष्मप्रपंचकलनाभावात्सदसद्भेदहीनोऽस्मि अमनस्कत्वात्संकल्परहितोऽस्म्यहम् एकस्यावशेषत्वात् नानात्मभेदहीनोऽस्मि अपरिच्छिन्नानंदमात्रत्वाद

१ द्वैताद्वैतविहीनोऽस्मि द्वंद्वहीनोऽस्मीत्यनयोर्व्यत्ययो योगेनेयं टीकाकृद्व्या

हानंदविग्रहोऽस्मि ॥५५॥५६॥ नित्यमोक्षस्वरूपत्वात्सापेक्षबंधमोक्षतत्साधनविहीनोस्मि शुद्धब्रह्मास्मीति योमन्यते ब्रह्मवित्सोप्यहमस्मि चित्ततत्कल्पितकलनासर्वस्वाभावाच्चित्तादिसर्वहीनोस्मि सर्वोत्कृष्टत्वात्परमोस्मि क्षराक्षरातीतपराक्षरत्वात्परोस्मि ॥५७॥५८॥ सदा वेदांतविचारप्रादुर्भावाद्विचारगम्योस्मि वस्तुतोयोऽहं निर्विचारोस्मि सोस्म्यहं ध्यानादिनानात्रिपुटीहीनोस्मि ॥ ५९ ॥ ६० ॥ जगज्जीवेशादिभेदवद्यल्लक्ष्यते द्वैतं तल्लक्ष्यं एवं यत्र लक्ष्यते तदलक्ष्यमद्वैतं पदमद्वयत्वात् लक्ष्यालक्ष्यविहीनोस्मि स्वातिरिक्तं पुरास्ति इदानीं लीयत इति भ्रमाभावाल्लयहीनरसोस्म्यहं मात्रादित्रिपुटीहीनोऽस्मि ॥ ६१ ॥ ६२ ॥

सर्वेंद्रियविहीनोऽस्मि सर्वकर्मकृदप्यहम् ॥ ६३ ॥
मुदितामुदिताख्योऽस्मि सर्वमौनफलोऽस्म्यहम् ॥ ६४ ॥
षड्विकारविहीनोऽस्मि षट्कोशरहितोऽस्म्यहम् ॥ ६५ ॥
देशकालविमुक्तोऽस्मि दिगंबरसुखोऽस्म्यहम् ॥ ६६ ॥
अखंडाकाशरूपोऽस्मि अखंडाकारमस्म्यहम् ॥ ६७ ॥
प्रपंचमुक्तचित्तोऽस्मि प्रपंचरहितोऽस्म्यहम् ॥ ६८ ॥
सर्वप्रकाशरूपोऽस्मि चिन्मात्रज्योतिरस्म्यहम् ॥ ६९ ॥
कालत्रयविमुक्तोऽस्मि कामादिरहितोऽस्म्यहम् ॥ ७० ॥
मुक्तिहीनोऽस्मि मुक्तोऽस्मि मोक्षहीनोऽस्म्यहं सदा ॥ ७१ ॥
गंतव्यदेशहीनोऽस्मि गमनादिविवर्जितः ॥ ७२ ॥

( टीका ) वाक्श्रोत्रादिसर्वेंद्रियविहीनोऽपि तत्तत्साक्षित्वात्मना सर्वकर्मकृदप्यहं अपाणिपादो जवनो ग्रहीतेत्यादिश्रुतेः स्वाभिन्नमोदनीयामोदनीयविषयत्वात् स्वस्वाज्ञत्वाभ्यां मुदितामुदितोऽयमित्याख्या यस्य सोऽहमस्मि स्वस्वविषयव्यापारवर्जनपूर्वकं वागाद्यंतःकरणां-

१ अत्रापि पूर्ववद्योगेन व्याख्या ।

तत्सर्वमौनफलं ब्रह्मास्म्यहं॥६३॥६४॥जायतेऽस्ति वर्द्धते परिणमते
पक्षीयते विनश्यतीति षड्भावविकारवद्देहविलक्षणत्वात् षड्विकार
हीनोऽस्मि त्वङ्मांसरुधिरस्नायुमज्जास्थिरूपषट्कोशरहितोऽस्मि दे
कालवस्तुपरिच्छेदाभावात् देशकालविमुक्तोऽस्मि अवधूतकदंबाल
भावितसुखमात्ररूपोऽस्मि ॥६५॥६६॥ खंडाकाशग्रासचिदाकाश
पत्वादखंडाकाशरूपोऽस्मि अखंडाकारवृत्तिगम्यत्वादखंडाकारं ब्र
ह्माहमस्मि चित्तकल्पितप्रपंचरहितोऽस्मि निष्प्रपंचत्वात् ॥६७॥६८
सूर्यादिघटांतसर्वप्रकाशरूपोऽस्मि अचिन्मात्रग्रासचिन्मात्रज्योति
भूतादिकालत्रयमुक्तोऽस्मि सर्वानर्थहेतुकामसंकल्पादिवृत्तिरहितोऽ
स्म्यहं ॥६९॥७०॥ बंधसापेक्षमुक्तिहीनोऽस्मि स्वाज्ञादिविकल्पि
तबंधमोक्षभ्रमतोमुक्तोऽस्मि तूलाद्यविद्याक्षयापन्नत्वान्मोक्षहीनोऽस्मि
सदा स्वातिरेकेण गंतव्यदेशहीनोऽस्मि निरुपाधिकत्वाद्गमनादि
विवर्जितः ॥ ७१ ॥ ७२ ॥

सर्वदा समरूपोऽस्मि शांतोऽस्मि पुरुषोत्तम ॥ ७३ ॥
चिदक्षरोऽहं सत्योऽहं वासुदेवोऽजरोऽमरः ॥ ७४ ॥
अहमेवाक्षरं ब्रह्म वासुदेवाख्यमव्ययम् ॥ ७५ ॥
परं ब्रह्मस्वरूपोऽहं परमानंदमस्म्यहम् ॥ ७६ ॥
केवलं ज्ञानरूपोऽहं केवलं परमोऽस्म्यहम् ॥ ७७ ॥
केवलं शांतरूपोऽहं केवलं चिन्मयोऽस्म्यहम् ॥ ७८ ॥
केवलं नित्यरूपोऽहं केवलं शाश्वतोऽस्म्यहम् ॥ ७९ ॥
केवलं सत्यरूपोऽहमहं त्यक्त्वाहमस्म्यहम् ॥ ८० ॥
केवलं तुर्यरूपोऽस्मि तुर्यातीतोऽस्मि केवलः ॥ ८१ ॥

१ वागाद्यन्तःकरणान्तं सकलजडाविषयं ब्रह्मेति भावः । २ नित्य
इति भावः । ३ तूलेति, अत्रादिपदेन मूलाविद्याग्राह्या । कार्याविद्या
तूलाचकारवाविद्योच्यते ।

केवलाकाररूपोऽस्मि शुद्धरूपोऽस्म्यहं सदा ॥ ८२ ॥
निर्विकल्पस्वरूपोऽस्मि निरीहोऽस्मि निरामयः॥८३॥
अपरिच्छिन्नरूपोऽस्मि ह्यनंतानंदरूपवान् ॥ ८४ ॥
आत्मारामस्वरूपोऽस्मि ह्यहमात्मा सदाशिवः॥८५॥
आदिमध्यांतशून्योऽस्मि ह्याकाशसदृशोऽस्म्यहम्॥८६॥

(टीका) स्वाज्ञदृष्टिविकल्पितविषमेषु सत्स्वपि सर्वदा समरूपोऽस्मि स्वातिरिक्तवैषम्यसाम्यतः शांतोऽस्मि अचित्क्षराभावाच्चिदक्षरोऽहं वसंत्यस्मिन् भूतानीति वासुः दीप्यत इति देवः वासुश्चासौ देवश्चेति वासुदेवोऽस्मि जरामरणाभावादजरामरोऽस्मि ॥ ७३ ॥ ७४ ॥ जगत्प्रपंचारोपापवादाधारतया परमाक्षरमद्वयं वासुदेवाख्यं तद्ब्रह्माहमस्मि परब्रह्मेत्युक्तार्थं ॥ ७५ ॥ ७६ ॥ सत्तास्वरूपत्वात्सत्यरूपोऽहं देहत्रयागोचराहंभावं त्यक्त्वाहमहमस्मि निर्विभागाहंपदार्थोस्मीत्यर्थः॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ [1]अर्द्धमात्रासंगतया तुर्योस्मि अर्धमात्रातीतकेवलनिर्विशेषब्रह्मतया तुरीयातीतोऽस्मि ॥ ८१॥८२ ॥ अपरिच्छिन्नानंदरूपत्वात् अनंतानंदरूपोऽस्मि हिशब्दोनिःसंशयार्थः ॥ ८३ ॥ ८४ ॥ सर्वप्रत्यगभेदेनासमंताद्रमते महीयत इत्यात्मारामः निष्प्रतियोगिकपरमात्मरूपोऽस्मि आदिमध्यांतवदविद्यापादातीतत्वेन आदिमध्यांतशून्योऽस्मि ॥ ८५ ॥ ८६ ॥

नित्यशुद्धचिदानंदसत्तामात्रोऽहमव्ययः ॥ ८७ ॥
नित्यबुद्धविशुद्धैकः सच्चिदानंदमस्म्यहम् ॥ ८८ ॥
भूमानंदस्वरूपोऽस्मि भाषाहीनोऽस्म्यहं सदा ॥८९॥
सर्वाधिष्ठानरूपोऽस्मि सर्वदा चिद्घनोऽस्म्यहम्॥९०॥

१ विषयगतविषयत्वोपादानन्तु तद्विरुद्धसमत्वप्रतिपत्ताय । २ अर्धमात्रासंग इत्यनेन अर्धमात्रोंकारपदार्थाभेदोविवक्ष्यते ।

चित्तवृत्तिविहीनोऽहं चिदात्मैकरसोऽस्म्यहम् ॥ ९१ ॥
अहं ब्रह्मैव सर्वं स्यादहं चैतन्यमेव हि ॥ ९२ ॥
अहमेवाहमेवास्मि भूमाकारस्वरूपवान् ॥ ९३ ॥
अहमेव महानात्मा ह्यहमेव परात् परः ॥ ९४ ॥
अहमन्यवदाभामि ह्यहमेव शरीरवत् ॥ ९५ ॥
अहं शिष्यवदाभामि ह्यहं लोकत्रयाश्रयः ॥ ९६ ॥
अहं कालत्रयातीत अहं वेदैरुपासितः ॥ ९७ ॥
अहं शास्त्रेण निर्णीत अहं चित्ते व्यवस्थितः ॥९८॥
आनंदघन एवाहमहं ब्रह्मास्मि केवलम् ॥ ९८ ॥
आत्मनात्मनि तृप्तोऽस्मि ह्यरूपोह्यहमव्ययः ॥१००॥

अखंडानंदरूपत्वाद्भूमानन्दस्वरूपोऽस्मि अधिष्ठेयप्रपंचसत्तत्सर्वाधिष्ठानरूपोऽस्मि वस्तुतोनिरधिष्ठानतया च चिद्घनोऽस्मि चिन्मात्रोऽहमित्यर्थः ॥८७॥८८॥८९॥९०॥ अचिदंतःकरणाभावाच्चिदात्मैकरसोऽस्म्यहं स्वाज्ञदृष्ट्या यत्सर्वं स्यात्स्वज्ञदृष्ट्या तद्ब्रह्मचैतन्यमहमेव भूमाकारेणाहमहमेवास्मि नान्यः पराक्साक्षिणोऽपि परोमहानात्माहमेवहि ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ स्वाज्ञदृष्ट्याहं स्वान्यशरीरवद्गुरुशिष्यादिवद्भामि स्वज्ञदृष्ट्या भूरादिलोकत्रयोपलक्षितात्रिधा पदाश्रयः परमेश्वरवदाभामि भूतादिकालत्रयातीतसाक्षिवद्वेदांतशास्त्रवेद्यवत् चित्तवृत्त्यवभासकप्रत्यगात्मवच्च भामि भूमानंदघन एवाहं अखंडानंदरूपत्वात् आत्मनाखंडाकारवृत्तिमन्मनसा स्वात्मन्येव तृप्तोऽस्मि पंचभूतविलक्षणत्वादरूपोऽहं अतएवाऽव्ययोऽस्मि सन्मात्रत्वात् ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

आकाशादपि सूक्ष्मोऽहमाद्यंताभाववानहम् ॥ १०१ ॥
सत्तामात्रस्वरूपोऽहं शुद्धमोक्षस्वरूपवान् ॥ १०२ ॥

सत्यानंदस्वरूपोऽहं ज्ञानानंदघनोऽस्म्यहम् ॥ १०३ ॥
नामरूपविमुक्तोऽहमहमानंदविग्रहः ॥ १०४ ॥
आदिचैतन्यमात्रोऽहमखंडैकरसोऽस्म्यहम् ॥ १०५ ॥
सर्वत्र पूर्णरूपोऽहं परामृतरसोऽस्म्यहम् ॥ १०६ ॥
एकमेवाद्वितीयं सद्ब्रह्मैवाहं न संशयः ॥ १०७ ॥
अहमेव परं ब्रह्म अहमेव गुरोर्गुरुः ॥ १०८ ॥
सर्वज्ञानप्रकाशोऽस्मि मुख्यविज्ञानविग्रहः ॥ १०९ ॥
तुर्यातुर्यप्रकाशोऽस्मि तुर्यातुर्यादिवर्जितः ॥ ११० ॥

दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ॥ १११ ॥

( टीका ) शब्दगुणकाकाशादपि निर्गुणत्वेन सूक्ष्मोऽहं उत्पत्तिप्रलयाभावात्सत्तामात्रस्वरूपोऽहं बंधसापेक्षविलक्षणत्वाच्छुद्धमोक्षस्वरूपवानस्मि नामरूपविलक्षणत्वेन सत्यज्ञानानंदरूपोऽस्मि स्वेतरासहं सत्तासामान्यरूपत्वादादिचैतन्यमात्रोऽहं खंडप्रपंचाभावादखंडैकरसोऽस्मि ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ सर्वत्राऽविद्यापदेऽखंडैकरसात्मना पूर्णरूपोऽहं परश्चासावमृतश्चेति परमानंदरसोऽस्म्यहं सजातीयविजातीयस्वगतभेदक्रमेणाद्वितीयं सन्मात्रं ब्रह्मैवाहमेव गुरोर्गुरुः जगद्गुरूणां ब्रह्मादीनामपि स्वविज्ञानोपदेष्टृत्वात् स्वज्ञस्वाज्ञदृष्टिभ्यां तुर्यप्राज्ञादिरूपेण भानात् तुर्यातुर्यप्रकाशोऽस्मि परमार्थदृष्टिविभातनिर्विशेषब्रह्ममात्ररूपेण तुर्यातुर्यादिवर्जितोऽस्मि आदिशब्देनावस्थाचतुष्टयमपि गृह्यते ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ सर्वावभासकमत्यक्तस्वरूपोऽहं निरवयवत्वाद्गगनोपमानोऽस्मि माया तत्कार्यात्परोऽस्मि निरावृतत्वेन सदा विभानात् सकृद्विभातोऽस्मि

जन्माऽभावादजोऽस्मि अनेकाभावादेकोऽस्मि क्षराभावादक्षरोऽस्मि
माया तत्कार्यलेपाभावादलेपकोऽस्मि सर्वाव्यापकत्वात्सर्वगतोऽस्मि
यदद्वयं ब्रह्मावशिष्यते सकलं जगच्च अहंचापि तदेव वस्तुतो
जगत्तद्गोचरसकलं नास्ति विमुक्तोस्मि ॐ ॐ कारार्थतुर्यतुर्यो
स्मि ॥ १११ ॥

अलेपकं सर्वगतं यदव्ययं तदेव चाहं सकलं विमुक्तः॥
अहं ब्रह्मास्मि मंत्रोऽयं जन्मपापं विनाशयेत् ॥ ११३
अहं ब्रह्मास्मि मंत्रोऽयं भेदबुद्धिं विनाशयेत् ॥ ११४
अहं ब्रह्मास्मि मंत्रोऽयं कोटिदोषं विनाशयेत् ॥ ११५
अहं ब्रह्मास्मि मंत्रोऽयं ज्ञानानंदं प्रयच्छति ॥ ११६ ॥
सर्वमंत्रान् समुत्सृज्य एतन्मंत्रं समभ्यसेत् ॥ ११७ ॥
सद्यो मोक्षमवाप्नोति नास्ति संदेहमण्वपि ॥ ११८ ॥

ॐतत्सदिति श्रीसार्द्धीतिकस्वानुभूतिवाक्यान्यष्टादशो
त्तरशतं ॥ अथसार्द्धीतिकसमाधिवाक्यानि । जीवात्म
परमात्मैक्यावस्था त्रिपुटिरहिता परमानंदस्वरूप
शुद्धचैतन्यात्मिका समाधिः ॥ १ ॥

(टीका) गर्भजन्मजरामरणसंसारमहद्भयान्मंतारं त्रायत इति
ब्रह्मास्मीति मंत्रः जन्महेतुपुण्यपापजातं जगज्जीवेशादिभेदबु
तत्कार्यकोटिदोषं च विनाश्य ज्ञानानंदकैवल्यं प्रयच्छति यत
ब्रह्मास्मीति मंत्रः कैवल्यप्रापकोऽतः सप्तकोटिमहामंत्रान् सां
पांगान् सम्यक् उत्सृज्याहं ब्रह्मास्मीत्येतन्मंत्रं सदाभ्यसेत्मुमेराम
समभ्यसेदेवं सदाहं ब्रह्मास्मीत्यनुसंधानात्सद्योमोक्षं विदेहकैव
यावीत्यत्राण्वपि संदेहोनास्तीत्यर्थः ॥ ११३ ॥ ११४ ॥ ११५
॥ ११६ ॥ ११७ ॥ ११८ ॥ आदित्यवाक्यान्येकोनविंशत्युत्त
शतं ॥११८॥ स्वानुभूतिप्रकरणविवरणं संपूर्णम् ॥ स्वानुभू

विशिष्टजीवन्मुक्तानां संप्रज्ञातासंप्रज्ञातनिर्विकल्पसमाध्यर्थं साद्धीतिकसमाधिवाक्यान्युच्यंते जीवात्मेत्यादिना व्यष्टिसमष्टिप्रपंचापवादाधारप्रत्यक्परैक्यावस्था व्यष्टिसमष्टिभिदा विकल्पशून्यनिर्विकल्पात्मनास्थितिः तत्र ध्यात्रादित्रिपुटीरहिता सुखदुःखसामान्यवैरल्यात्परमानंदस्वरूपा शुद्धचैतन्यात्मिका निर्विकल्पकधीवृत्यारूढा चिन्निर्विकल्पसमाधिरुच्यते ॥ १ ॥

ध्यातृध्याने विहाय निवातस्थितदीपवत्। ध्येयैकगोचरं चित्तं समाधिः ॥ २ ॥ प्रचारशून्यं मनः परमात्मनि लीनं भवति ॥ ३ ॥ प्राप्ते ज्ञानेन विज्ञाने ज्ञेयं परमात्मनि हृदि संस्थिते देहे लब्धशांतिपदं गते तदा प्रभामनोबुद्धिशून्यं भवति ॥ ४ ॥ प्राणापानयोरैक्यं कृत्वा धृतकुंभकोनासाग्रदर्शनदृढभावनया द्विकरांगुलीभिः षण्मुखीकरणेन प्रणवध्वनिं निशम्य मनस्तत्र लीनं भवति ॥ ५ ॥ पयस्रवानंतरं धेनुस्तनक्षीरमिव सर्वेन्द्रियवर्गे परिनष्टे मनोनाशोभवति ॥ ६ ॥

( टीका ) ध्यातृध्यानकलनां विहाय निवातप्रदेशारोपितदीपवद्ध्येयरूपब्रह्मैकगोचराखंडाकारचित्तवृत्तिः समाधिः ॥ २ ॥ कामादिवृत्तिशून्यं मनः परमात्मभावमेति तन्मात्रावस्थितिः समाधिः ॥ ३ ॥ श्रुत्याचार्यप्रसादलब्धशास्त्रजन्यज्ञानेन स्वानुभूतिजन्यविज्ञाने प्राप्ते सति स्वहृदि ज्ञेयरूपे परमात्मनि स्वमात्रमिति संस्थिते देहत्रयमस्ति नास्तीति देहत्रयाभिमाने लब्धं शांतिपदमपन्हवं गते सत्यथ तदानीमेव प्रभामनोबुद्धिकल्पितजाग्रदाद्यवस्थात्रयं शून्यं भवति अपन्हवं भजतीत्यर्थः यत्र श्रोत्रादिभिः शब्दादिविषयजातं स्फुटं गृह्यते सोऽहंकृतपूर्णविकासः प्रभा जाग्रदवस्थेत्युच्यते अहंकृतिविकासार्थोयत्र मीयते तन्मानसस्तत्कार्यं स्वप्न

उच्यते यत्राहंकृतिस्तनुभावमेत्य बुध्यते स बुद्धिस्तत्कार्यं सुषुप्ति
रुच्यते ॥ जाग्रदाद्यवस्थात्रयशांतिरेव निर्विकल्पसमाधिरित्यर्थः॥
स्वातिरिक्तमसक्तौ तदुन्मूलनाय कर्णनासानयनद्वाराणि द्वि
गुलिभिरंगुष्ठतर्जनीमध्यमांगुलियुगलैः परमुखीकरणेन नास
र्शनदृढभावनया च रेचकपूरकविरलकेवलकुंभकावस्थायां ऊ
धोवृत्तिमत्प्राणापानयोरैक्यं कृत्वाथ दीर्घघंटानिनादवद्नाहता
हृदयं प्रणवध्वनिरुदेति तदवलंबनं मनो विलीयते तल्लयावस्थ
माधिरित्यर्थः ॥ ५ ॥ गोपालवत्सयोगतो धेनुस्तनगतपयः
नंतरं तत्स्तनानां कंडूतिक्षयो भवति निरुपद्रवजनकधेनुस्तन
मिव योगिनो योगमहिम्ना स्वस्वविषयग्रहणपूर्वकं वाक्श्रोत्रा
सर्वेन्द्रियवर्गे परिनष्टे सति योनिरालंबनमनोनाशो भवति सेयम
नस्कावस्थैव समाधिरित्यर्थः ॥ ६ ॥

यदा पंचावतिष्ठंते ज्ञानानि मनसा सह ॥ ७ ॥
बुद्धिश्च न विचेष्टंती तामाहुः परमां गतिम् ॥ ८ ॥
संशांतसर्वसंकल्पा या शिलावदवस्थितिः ॥ ९ ॥
जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥ १० ॥
मारुते मध्यसंचारे मनस्थैर्यं प्रजायते ॥ ११ ॥
यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी ॥ १२ ॥
सरूपो सौ मनोनाशो जीवन्मुक्तस्य विद्यते ॥ १३ ॥
विरूपाख्यस्वरूपनाशस्तु वर्तते देहमुक्तिके ॥ १४ ॥

( टीका. यदा तुर्यावस्थाविभक्तजाग्रदवस्थायां स्वांतर्वहि
षयसत्वेऽपि ब्रह्मैवेदं सर्वमिति श्रुत्यर्थानुभवज्ञानेन शब्दादिविष
ग्रहणपूर्वकं ज्ञानानि पंचज्ञानेन्द्रियाणि स्वयं ब्रह्माकारतयाऽवति
बद्धि तुर्यजागरणं अहं ब्रह्मास्मीत्यनुभवतः संजातब्रह्मसाक्षात्का
पूर्वभाविमनःकामादिवृत्ति विहाय स्वयं निर्विकल्पकतयाऽवति

स तुरीयस्वप्नोभवति गुणसाम्यावस्थायामंतर्बहिः कलनाशून्यत्वेन यया बुध्यते सैव बुद्धिः चशब्दस्तद्वृत्तिसमुच्चयार्थः पुनर्व्युत्थानपर्यंतं न निचेष्टतीति यत्तदेव तुरीयसुषुप्तिरेवं बुद्धेर्निर्विकल्पकावस्था यावशिष्यते तद्गतव्युत्थानकलनाभावे तामेव योगिनः परमां गतिं विदेहमुक्तमाहुः कथयंतीत्यर्थः ॥७८॥ या पीवरशिलावदवस्थितिः नित्या चलस्वरूपा संशांतसर्वसंकल्पादिनिवृत्तिः ततः देहत्रयाभावाज्जाग्रदाद्यवस्थात्रयनिद्राविनिर्मुक्ता अवस्थात्रयेऽपि तत्त्वाप्रतिबोधलक्षणनिद्रायास्तुल्यत्वात् सेयं सर्वापह्नवसिद्धिब्रह्ममात्रपरास्थितिरवशिष्यते ॥ १० ॥ इगग्निमनोभिः सह प्राणापानैक्याक्षिप्यमत्यक्षारुते सुषुम्नानाडीमध्ये संचरति सति तत्रत्यचिदाकाशे मनस्थैर्यं प्रजायते योमनःसुस्थिरीभावः सैवावस्था मनोन्मनीर्विकल्पकसमाधिर्भवति ॥ ११ ॥ १२ ॥ यथोक्तलक्षणजीवन्मुक्तस्य मुनेः पुनर्व्युत्थानार्हतया सौमनोनाशः सरूपनाश इत्यभिधीयते समाध्यपगमे पुनर्व्यावृत्तिदर्शनात् लिङ्गादेः लिङ्गशरीरस्य पुनर्व्युत्थानानर्हतया रूपं यथा भवति तथा त्वरूपनाशस्तु विदेहमुक्तौ विद्यते तद्व्यावृत्तिहेतुकर्मत्रयापह्नवादित्यर्थः ॥ १ ॥ १४ ॥

चित्ते चैत्यदशाहीने या स्थितिः क्षीणचेतसाम् ॥ १५ ॥
सोच्यते शांतकलना जाग्रत्येव सुषुप्तता ॥ १६ ॥
नैसर्गाग्रस्य स्वप्नः संकल्पानामभावनात् ॥ १७ ॥
सुषुप्तभावोनाप्येतद्भावाज्जडता स्थितेः ॥ १८ ॥
सत्त्वावबोध एवासौ वासना तृणपावकः ॥ १९ ॥
प्रोक्तः समाधिशब्देन ननु तूर्णीमवस्थितिः ॥ २० ॥
निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ॥ २१ ॥
वृत्तिविस्मरणं सम्यक् समाधिरभिधीयते ॥ २२ ॥
दृश्यासंभवबोधेन रागद्वेषादितानवे ॥ २३ ॥

१२

रतिर्ब्रह्मोदिता या सा समाधिरभिधीयते ॥२४॥

( टीका ) क्षीणचेतसां योगिनां चित्तेऽन्तःकरणे संकल्पादि- चैत्यदशाहीने सति निर्विकल्परूपिणी या स्थितिरवशिष्यते सैव जाग्रत्येव विषयग्रहणलक्षणसुषुप्तता सर्वव्यावृत्तिशून्यतः शांतकल्पनानिर्विकल्पकसमाधिरुच्यते ॥ १५ ॥ १६ ॥ एतन्निर्विकल्पावस्थारूपं जाग्रन्न भवति वाङ्मन आदिचतुर्दशकरणव्यावृत्त्यभावात् नचस्वप्नरूपं स्वांतःकरणचतुष्टयगोचरसंकल्पादिवृत्तिनामभावात् एतत्सुषुप्तभावोपि न भवति सुषुप्तिवज्जडतास्थितेरभावात् ॥ १७ ॥ १८ ॥ असत्प्रपंचापवादाधिकरणं सतोभावः सत्वं तत्सत्वमात्रमित्यवबोधोऽसौ अनंतकोटिजन्महेतुवासनातृणकूटभस्मीकरणादस्त्रज्वलत्पावकोभवति ब्रह्ममात्रप्रबोध एव समाधिशब्देनोक्तः नतु चलवत्तूष्णीमवस्थितिः ॥१९॥२०॥जाग्रदाद्यवस्थात्रयविकाररहितया निर्विकाररूपया वृत्या पुनर्निर्विशेषब्रह्माकारतया च युक्तस्य योगिनः सम्यग्ब्रह्माकारवृत्तिविस्मरणमेव समाधिरित्यभिधीयते स्वात्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन स्वाज्ञादिदृष्ट्या दृश्यत इति दृश्यं स्वातिरिक्तप्रपंचजातं इदं सर्वं नास्त्येव नोत्पन्नं नोस्थितं पश्यतेहापि सन्मात्रमसदन्यत् ब्रह्ममात्रमसम्भदीत्यादिदृश्यासंभवप्रबोधेन स्वातिरिक्तदृश्यकल्पनामूलरागद्वेषादिस्तनुतामेति रागाद्यसंभवज्ञाने सति अथ या ब्रह्मोदिता ब्रह्ममात्ररतिः सा समाधिरित्यभिधीयते ॥२१॥२२॥२३॥२४॥

अहमेव परं ब्रह्म ब्रह्माहमिति संस्थितिः ॥ २५ ॥
समाधिः सतु विज्ञेयः सर्ववृत्तिनिरोधकः ॥२६॥
समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ॥२७॥
ध्यानस्य विस्मृतिः सम्यक् समाधिरभिधीयते॥२८॥
समाहिता नित्यतृप्ता यथा भूतार्थदर्शिनी ॥२९॥

ब्रह्मन् समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥३०॥
अक्षुब्धा निरहंकारा द्वन्द्वेष्वननुपातिनी ॥३१॥
ब्रह्मन् समाधिशब्देन मेरोः स्थिरतरा स्थितिः॥३२॥
निश्चिता विगताभीष्टा हेयोपादेयवर्जिता ॥३३॥
ब्रह्मन् समाधिशब्देन परिपूर्णमनोगतिः ॥३४॥
सलिले सैन्धवं यद्वत्साम्यं भजति योगतः ॥३५॥
तथात्ममनसोरैक्यं समाधिरभिधीयते ॥३६॥

(टीका) प्रत्यगहमेव सर्वापवादाधिकरणं परं ब्रह्म तदेव सर्वावभासकप्रत्यगहमिति प्रत्यगभिन्नब्रह्मात्मना संस्थितिरेवतु सर्ववृत्तिनिरोधकः समाधिरितिविज्ञेयम् ॥ २५ ॥ २६ ॥ तत्त्वं पदलक्ष्ययोः परजीवयोरेकतां प्रति ब्रह्ममात्रसंविदुत्पत्तिरेव समाधिरुच्यते ॥ २७ ॥ निर्विशेषं ब्रह्माहमिति सम्यग्ध्यानस्य विस्मृतिरेव समाधिः ॥ २८ ॥ हेब्रह्मन् ब्रह्मातिरिक्तं न किंचिदस्तीति समाहिता निर्विशेषं ब्रह्मस्वमात्रमिति नित्यतृप्ता यथा भूतार्थदर्शिनी परा प्रज्ञा बुधैः समाधिशब्देनोच्यते ॥२९ ॥ ३० ॥ ब्रह्मातिरिक्तं न किंचिदस्तीत्यनुभवबलेन श्वासादिभिः कामादिवृत्तिभिर्वा क्षुब्धविरहिता देहदावंह्भावविरला शीतोष्णादिद्वंद्वेष्वननुपातिनी शीतोष्णादिस्फुर्तिवर्जिता मेरोरपि स्थिरतरा मनःस्थितिः ब्रह्मन् समाधिशब्देनोच्यते ॥ ३१ ॥ ३२ ॥ अहंब्रह्मास्मीति निश्चिता स्वातिरिक्ताऽभ्युदयरहिता अज्ञानं हेयं ज्ञानमुपादेयं तदुभयवर्जिता इत्थं विशेषणविशिष्टा मनोगतिः सर्वपरिपूर्णब्रह्मगोचरा प्रज्ञा ब्रह्मन् समाधिशब्देनोच्यते ॥ ३३ ॥ ३४ ॥ यथा सलिले सैंधवपिंडयोगतः सर्वं सैंधवत्वेन सलिलत्वेन वा साम्यं भजति तथा जलसैंधवस्थानीयात्ममनसोरैक्यं समाधिरभिधीयते ॥ ३५ ॥३६॥

यत्समत्वं तयोरत्र जीवात्मपरमात्मनोः ॥ ३७ ॥
समस्तनष्टसंकल्पः समाधिरभिधीयते ॥ ३८ ॥
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ॥ ३९ ॥
सर्वशून्यं निराभासं समाधिरभिधीयते ॥ ४० ॥
ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना ॥ ४१ ॥
संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥ ४२ ॥
प्रशांतवृत्तिकं चित्तं परमानंददीपकम् ॥ ४३ ॥
असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥ ४४ ॥
स्वानुभूतिरसावेशाद्दृश्यशब्दाद्युपेक्षितुः ॥ ४५ ॥
निर्विकल्पसमाधिः स्यान्निवातस्थितदीपवत् ॥ ४६ ॥
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं चिदात्मकम् ॥ ४७ ॥
अतद्व्यावृत्तिरूपोऽसौ समाधिर्मुनिभावितः ॥ ४८ ॥

( टीका ) जीवात्मपरमात्मनोः प्रत्यक्परयोस्तयोः सच्चिदानंदत्वेन यत्सममवशिष्यते तद्रूपोऽयं नष्टसमस्तसंकल्पजालः निर्विकल्पकसमाधिरभिधीयते ॥ ३७ ॥ ३८ ॥ अहंकारपूर्वापरस्वल्पाविकाशात्मकप्रभामनोबुद्धिविकल्पितजाग्रत्स्वप्नसुषुप्तितत्कार्यं सर्वस्वं शून्यमिति ज्ञात्वा तच्छून्यापवादास्पदमनामयं निराभासं ब्रह्मास्मीति बोध एव समाधिरित्यभिधीयते ॥ ३९ ॥ ४० ॥ देहादावहंभावं विना ध्यानाभ्यासप्रकर्षजाताखंडैकरसं ब्रह्मास्मीति ब्रह्माकारमनोवृत्तिप्रवाह एवाखंडाकारवृत्त्यात्मकः संप्रज्ञातसमाधिः स्यात् ॥ ४१ ॥ ४२ ॥ प्रशांतस्वातिरिक्तस्फूर्तिवृत्तिकम् चित्तं परमानंददीपकं सद्बोधमात्ररूपेणावशिष्यते योऽयं निर्विकल्पकबोधो योगिनां प्रियो भवति सोऽयमसंप्रज्ञातनामा समाधिर्भवति ॥ ४३ ॥ ४४ ॥ निर्विशेषं ब्रह्मास्मीति स्वानुभूतिरसाभिनिवेशात् दृश्यानुविद्धशब्दानुविद्धसविकल्पकसमाध्युपेक्षितुः मुनेर्निवातस्थि-

ता अतादीपवन्निर्विकल्पकसमाधिर्भवति ॥ ४५ ॥ ४६ ॥ सभा-मनोबुद्धिशब्दवाच्यावस्थात्रयशून्याधिकरणं चिद्रात्मकं चिन्मात्रं तदतिरिक्तं किंचिन्नेत्यतद्व्यावृत्तिरूपोऽसौ निर्विकल्पकसमाधिर्मुनिभिर्भावितोभवतीति ॥ ३७ ॥ ४८ ॥

ऊर्ध्वपूर्णमधः पूर्णं मध्यपूर्णं शिवात्मकम् ॥ ४६ ॥
साक्षाद्विधिमुखोह्येष समाधिः पारमार्थिकः ॥५०॥

ॐ तत्सदिति श्रीसार्द्धांनिकसमाधिवाक्यानि पंचाशत् ॥५ ५॥ अथ सार्द्धांनिकाष्टविधिस्वरूपवाक्येषु नानालिंगस्वरूपवाक्यानि श्रोत्रस्य श्रोत्रं मनसोमनो-यद्वाचोहवाचं स उप्राणस्य प्राणः ॥ १ ॥ योवै भूमात-त्सुखम् ॥२॥ योवैभूमातदमृतम् ॥३॥ नेतिनेति नह्ये-तस्मादिति नेत्यन्यत्परमस्त्यथ नाम ५ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेव सत्यम् ॥ ४ ॥

( टीका ) अविद्यापदतुर्यभाग ऊर्ध्वशब्दार्थः तत्स्थूलांशोऽधः शब्दार्थः तत्सूक्ष्मबीजभागोमध्यमशब्देनोच्यते एकमूर्ध्वादिकलनाकलितमविद्यापदतत्कार्यजातं स्वाज्ञदृष्ट्याऽशिवमपि स्वज्ञदृष्ट्या शिवात्मकं शिवमात्रं सच्चिन्नतियोगिकपूर्णं भवति अतन्निरसनं विना साक्षात्पूर्णमेवात्रशिष्यत इति विधिमुखः ब्रह्ममुखः प्रकटितोह्येषसमाधिः पारमार्थिकरूपो भवति ॥४६॥५०॥ आदत्यवाक्यान्येकोनसप्तत्युत्तरं नशतं ॥५८॥ समाधिप्रकरणविवरणं संपूर्णं॥१०॥ निर्विकल्पकसमाधिनिष्ठानां यदात्मस्वरूपत्वेनाभिमतं तत्स्वरूपप्रकटनायाष्टविधस्वरूपमहावाक्येषु नानालिंगस्वरूपवाक्यान्युच्यते श्रोत्रस्येत्यादिना स्वाज्ञदृष्ट्या स्वयमेव श्रोत्रादिज्ञानेंद्रियपंचकं मन आदंतःकरणचतुष्टयं वागादिकर्मेंद्रियपंचकं प्राणादिवायुपंचकं भूत्वा स्वाज्ञदृष्ट्या श्रोत्रमनोवाक्प्राणेष्वसंगतया स्थित्वा श्रोत्रमनो-

वाक्यप्राणानां स्वस्वविषयग्रहणशक्तिं जनयन्वस्तुतोयः स्वमात्रम
शिष्यते सोऽयं समाधिनिष्ठात्माभवतीत्यर्थः ॥ १ ॥ योवा अपरि
च्छिन्नरूपोभूमा तत्स्वरूपं निरतिशयसुखं तत्स्वरूपेणावस्थ
परमामृतं विदेहकैवल्यमित्यर्थः ॥ २ ॥ ३ ॥ प्रथमनेतिशब्द
स्वाविद्यापदस्थूलांशतद्व्यष्टिसमष्ट्याधारोऽपि निषिध्यते द्विती
तृतीयचतुर्थनेतिशब्दैः स्वाविद्यापदसूक्ष्मबीजतुर्यांशप्रपंचोनिषि
एवं निषेधाधिकरणत्वेन नान्यत्परमस्ति अथ तद्व्यतिरिक्तं नाम
नाममात्रं वाचारंभणत्वात् नामधेयविश्रांतिस्वरूपं तु सत्य
सत्यमिति तत्र प्राथमिकसत्यशब्दार्थस्तु विश्वविराडीशादिप्राथ
ब्देनोच्यते तत्प्राणजातसत्ताप्रदं तुर्यतुर्यातीतं वा भवति ॥ ४ ॥

रातेर्दातुः परायणम् ॥५॥ सपर्यगाच्छुक्रमकाय
व्रणमस्नाविर ९ शुद्धमपापविद्धम् ॥ ६ ॥
परं ब्रह्म प्रणवश्च परस्मृतः ॥ ७ ॥
ननिरोधोनचोत्पत्तिर्नबद्धोनच साधकः ॥ ८ ॥
नमुमुक्षुर्नवै मुक्त इत्येषा परमार्थता ॥ ९ ॥

(टीका) रातिरिति षष्ठ्यर्थे प्रथमा रातेः स्वातिरिक्तसर्व
धनस्य दातुः सर्वस्वसमर्पकस्य जीवन्मुक्तस्य यद्ब्रह्मपरायणं तत्प
गतिरित्यर्थः यद्वा रातेर्मित्रस्य भक्तस्य य ईशोविज्ञानं ददाति त
भक्तविज्ञानदातुरीश्वरस्यापि परायणं पर्यवसानमित्यर्थः ॥ ५
स परमात्मा परि समंतादगात् सर्वव्यापकोभवति तत्स्वरूप
शुक्रं शुक्रं ज्योतिष्मत् शुक्रतेजोमयं ब्रह्मेतिश्रुतेः तत्किं देह
विशिष्टं तत्राह अकायं कार्यकारणलिंगदेहत्रयवर्जितं अव्रणमस्
विरं व्रणशिरापुंजस्थूलदेहविरलं अतएव शुद्धाशुद्धदेह
भावात् अपापविद्धं तद्धेतुपापपुण्यवर्जितं ॥ ६ ॥ स्वाज्ञदृष्ट्या
प्रणव एवापरं ब्रह्म विश्वविराडीशादिरूपेणोपबृंहणात् स्वाज्ञदृष्ट्या

मणावस्तु परस्तुर्यतुर्य इतिस्मृतः तुर्योंकाराग्रविद्योतं तुर्यतुर्यमिति श्रुतेः ॥ ७ ॥ सर्वापन्हवसिद्धनिष्प्रतियोगिकपरमात्मनः कदापि न निरोधः प्रलयोऽस्ति निरोधाभावेऽप्युत्पत्तिः किंन स्यादित्यत्राह नचोत्पत्तिरिति अजत्वात् अजत्वेऽपि जीवरूपेण संसारबद्धत्वं तन्निरसनसाधकत्वं स्वात्मबंधतोमुमुक्षुत्वं ज्ञानान्मुक्तत्वं च परमार्थतः स्यादित्यत आह नेत्यादिना परमात्मा कदापि बद्धः साधकोमुमुक्षुर्मुक्तश्च न भवति स्वस्य निष्प्रतियोकिस्वमात्रतैव परमार्थता पारमार्थिकीत्यर्थः ॥ ८ ॥ ९ ॥

अखंडैकरसं शास्त्रमखंडैकरसा त्रयी ॥ १० ॥
अखंडैकरसोदेहोअखंडैकरसं मनः ॥ ११ ॥
अखंडैकरसं सूत्रमखंडैकरसोविराट् ॥ १२ ॥
अखंडैकरसा विद्या अखंडैकरसोऽव्ययः ॥ १३ ॥
अखंडैकरसं गोप्यमखंडैकरसः शशी ॥ १४ ॥
अखंडैकरसं क्षेत्रमखंडैकरसा क्षमाः ॥ १५ ॥
अखंडैकरसास्ताराः अखंडैकरसोरविः ॥ १६ ॥
अखंडैकरसाज्ञाता अखंडैकरसा स्थितिः ॥ १७ ॥
अखंडैकरसा माता अखंडैकरसः पिता ॥ १८ ॥
अखंडैकरसोराजा अखंडैकरसं पुरम् ॥ १९ ॥
अखंडैकरसं तारमखंडैकरसोजपः ॥ २० ॥
सर्ववर्जितचिन्मात्रं त्वत्तामत्ताचचिन्मयम् ॥२१॥
आदिरंतं च चिन्मात्रं गुरुशिष्यादिचिन्मयम् ॥२२॥
दृग्दृश्यं यद्धिचिन्मात्रमस्तिचेच्चिन्मयं सदा ॥२३॥
सर्वाश्चर्यं च चिन्मात्रं देहश्चिन्मात्रमेव हि ॥२४॥
अहं त्वं चैव चिन्मात्रं मूर्त्तामूर्त्तादिचिन्मयम्॥२५॥
पुण्यं पापं च चिन्मात्रं जीवश्चिन्मात्रविग्रहः॥२६॥

देहत्रयविहीनत्वात्कालत्रयविवर्जनात् ॥ २७॥

( टीका ) खंडनाया तत्कार्यापन्हवसिद्धमखंडैकरसं तदतिरिक्तशास्त्रादिजपांतकलना नास्त्येव अपन्होतव्यमायाकार्यत्वात् यदि व्यावहारिकादिदृष्ट्या शास्त्रादिप्रसक्तिः तदा शास्त्रादिजपांतमखंडैकरसं ब्रह्मैवेत्यर्थः स्वातिरिक्तकर्तृत्वचिद्वर्जितं चित्प्रपंचापन्हवसिद्धं चिन्मात्रं निष्प्रतियोगिकमित्यर्थः स्वातिरिक्तत्वत्तादिजीवांतकलनायां सत्यां चिन्मात्रता कुत इत्यत आह त्वत्तेत्यादिदृष्ट्या त्वत्तादिकलनाप्रसक्तो स्वदृष्ट्या सर्वं चिन्मात्रमेवेत्यर्थः देहत्रयादिषु स्वांतकलनासत्वात्कथं चिन्मात्रतेत्याशङ्क्य चिन्मात्रसाधकहेतुनुपन्यस्यति ॥ २७ ॥

जीवत्रयगुणाभावात्तापत्रयविवर्जनात् ॥ २८ ॥

लोकत्रयविहीनत्वात्सर्वमात्मेति शासनात् ॥२९॥

चित्ताभावाच्चिंतनीयं देहाभावाज्जरा नच ॥ ३० ॥

पादाभावाद्गतिर्नास्ति हस्ताभावात्क्रिया नच ॥ ३१

मृत्युर्नास्ति जनाभावाद्बुद्ध्यभावात्सुखादिकम् ॥ ३

"ओंतत्सदिति सार्द्धांतिकनानालिंगस्वरूपवाक्याद्वात्रिंशत् अथ सार्द्धांतिकपुल्लिंगस्वरूपवाक्यानि स एषोऽकलोऽमृतः ॥ १ ॥ नांतः प्रज्ञं न बहिः प्रज्ञं नोभयतः ॥

( टीका ) देहत्रयेति जीवत्रयगुणाभावादित्यत्र जीवत्रयं गुणत्रयं चेति मंतव्यं शिष्टं स्पष्टं आदत्यवाक्यसंख्या एकादिकलिंदुत्तरपदशतं नानालिंगस्वरूपमहावाक्यविवरणं संपूर्णम् ॥ अथ सार्द्धांतिकपुल्लिंगस्वरूपमहावाक्यानि लिख्यंते स इत्यादिना यः एष चिद्धातुः स एव प्रश्नोपनिषत्पठितप्राणादिनामांतषोडशकलानुपवादास्पदत्वादकलः निष्प्रतियोगिकनिष्कलत्वादयमसृतः विद्याज्ञान

वरकैवल्यरूपत्वात् ॥ १ ॥ नान्तःप्रज्ञमित्यादिपाठक्रमादर्थक्रमोब-लीयानिति न्यायेन विश्वतैजसविराट्सूत्रैक्योऽत्रानुज्ञातृभिदायोगात् नाहं बाह्यांतर्भवस्थूलसूक्ष्मप्रपंचोभयतः प्रज्ञः जाग्रत्स्वापाभिविभक्त-तैजसप्रपंचनस्य विश्वाविश्वप्रपंचनपूर्वकत्वात् न स्थूलप्रज्ञं न सूक्ष्म-प्रज्ञमित्यादिश्रुत्यंतराच्च नाहं बहिः प्रज्ञः व्यष्ट्यादिकलनाजुष्टजा-गरणजागरणाभिमानि विश्वविश्वविराड्विराडैक्योऽत्र कलनाभा-वात् तथा नांतः प्रज्ञः व्यष्टिसमष्टितदैक्ययोजनं सर्वत्र समं जाग्र-त्स्वप्नाभिमानिविश्वतैजसविराट्सूत्रैक्योऽत्रानुज्ञातृभिदायोगात् नाहं बाह्यांतर्भवः स्थूलसूक्ष्मप्रपंचोभयतः प्रज्ञः जाग्रत्स्वप्नाभिमानिविश्व-प्राज्ञविराड्बीजैक्योऽत्रानुज्ञैकरसाभिधानवैरल्यान्नाहं बाह्यांतर्भवस्थू-लसूक्ष्मप्रपंचोभयतः प्रज्ञः जाग्रज्जाग्रदादिभावाभावप्रज्ञाभिमानिवि-श्वविराट्तुर्यैक्योऽत्रविकल्पायोगात् एवं स्थूलप्रपंचापवादकब्रह्म-विद्भवति नाहमप्रज्ञः स्वप्नजागरणाभिमानितैजसविश्वसूत्रविराडैक्या-नुज्ञातृनेतृकलनाया मृग्यत्वात् ॥

प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृश्यमव्यवहार्यम-ग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपं-चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यंते स आत्मा स विज्ञेयः ॥ २ ॥

( टीका ) अर्थक्रमानुसारेण प्रज्ञानघनमिति वाक्यार्थं पश्चा-... चक्षुरादृश्यपदार्थं उच्यते अदृष्टस्यः स्वप्नस्वप्नाभिमानिवि-... कल्पितदृश्यमोहिततैजसतैजससूत्रसूत्रतदैक्यानुज्ञात्रविकल्पविल-... णत्वात् एवं स्थूलसूक्ष्मप्रपंचापवादकब्रह्मविद्वरो भवति अदृम-... ह्यः स्वापजागरणाभिमानिस्वाज्ञानवृत्तिग्राह्यप्राज्ञविश्वबीजविराडै-... क्यानुज्ञैकरसोऽत्रनृभावहानात् अदृमलक्षणः स्वापस्वप्नाभिमानि-... ज्ञानवृत्तिलक्षणचैत्रप्राज्ञतैजसबीजसूत्रैक्यानुज्ञैकरसानुज्ञानभिदां

संभवात् अहमचिंत्यः न किंचन वेदिपयिति परागपंचित्यस्वापत पाभिमानिमाज्ञमाशबीजवीजैक्यानुज्ञैकरसानुज्ञैकरसविलक्षणत्वात् अहमव्यपदेश्यः स्वापतुर्यावस्थाभिमानिस्वापजाग्रदादिभावाभा साक्षित्वव्यपदेश्यमाज्ञबीजतुर्यैक्यानुज्ञैकरसाविकल्पकलनाशून्यत्व एवं स्थूलसूक्ष्मबीजप्रपंचापवादकृत् ब्रह्मविद्वरीयान् भवति मेकात्मप्रत्ययसारः तुर्यजागराभिमानिध्यात्राद्यनेकप्रत्ययसार विश्वविराद् तदैक्याविकल्पोन्मतृत्वात् अहं प्रपंचोपशमः तुर्य प्नाभिमानिकचित्कदाचिद्शांतप्रपंचतुर्यतैजससूत्रैक्याविकल्पानु तृकलना अयोगात् अहं शांतः तुर्यस्वापाभिमानिगुणसाम्याव शांततुर्यप्राज्ञबीजतदैक्याविकल्पानुज्ञैकरसगतहेयांशाभावात् स्थूलसूक्ष्मबीजतुर्यावस्थाभागत्रयापवादकृद् ब्रह्मविद्वरिष्ठो भवति इमेव शिवः जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसांतचतुष्पंचदशक शिवापन्हवसिद्धतुर्यतुर्यस्वरूपत्वात् अत एवाहमद्वैतः निष्प्र गिकत्वात् उक्तविशेषणविशिष्टमात्मानं ब्रह्मविद्वरिष्ठाश्चतुर्थं तुरीयं वा मन्यंते स एवात्मा स्वातिरिक्तानात्मापन्हवसिद्ध मतया विज्ञेयः ॥ ३ ॥

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपंचोपशमः शिवोऽद्वै यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजाना स भूमा ॥ ४ ॥ स एष नेति नेत्यात्माऽगृह्योनहि गृ ऽशीर्योनहि शीर्यतेऽसंगोनहि सज्यतेऽसितो न व्य म रिष्यति ॥५॥ रसघन एवैवं वाऽरेऽयमात्माऽनंतर बाह्यः कृत्स्नः प्रज्ञानघन एव ॥ ६ ॥ तस्मान्मनोवि मनसि गते संकल्पविकल्पे दग्धे पुण्यपापे सदाशि

( टीका ) अमात्रःस्थूलाकारादिपश्यन्त्यंतपंचदशमात्रा सिद्धत्वात् चतुर्थः तुर्योंकाराग्रविद्योतनात् अव्यवहार्यः तुर्य

वगतेः स्वातिरिक्ताभिधानाभिधेयभिदा विशिष्टनानाव्यवहृत्यपन्ह-वपूर्वकत्वात् प्रपंचोपशमः निष्प्रतियोगिकनिष्प्रपंचत्वात् शिवः स्वातिरिक्ताशिवग्रासत्वात् अद्वैतः परमाद्वैतत्वात् ॥ ३ ॥ यत्र यस्मिन् स्वमात्रे ब्रह्मविद्वरीयान् स्वातिरेकेणान्यत्किंचिदपि रूपजातं न पश्यति शब्दजातं न शृणोति सदसद्वस्तुजातं न विजानाति स भूमा परमात्मेत्युच्यते ॥ ४ ॥ योनेति नेत्यतद्व्यावृत्त्याविभातः स एष नेतिनेतीति निषेधाधारः परमात्माऽवशिष्यते स कर्मेंद्रियैर्नगृह्यत इत्यग्राह्यः योनहि शीर्यते जीर्यते सोऽशीर्यः अशरीरत्वात् यः केनापि नहि सज्जते सोऽसंगः अमूर्त्तत्वात् अत एवायमसितोन व्यथते नच्छिद्यते न रिष्यति न नश्यति ॥ ५ ॥ अरे मैत्रेय अयमात्मा सच्चिदानंदरसघन एव एवं वै रसघन एव वै भवतु अंतर्बाह्ययोगतस्तस्य विशेषता स्यादिति तत्राह अनंतरः अबाह्य इति अंतर्बाह्यविभागशून्यः अत एव कृत्स्नः स्वातिरिक्तांतर्बाह्यांतराभावात् आत्मैवेदं सर्वमितिश्रुतेः वस्तुतोऽयं प्रकर्षेण ज्ञानघन एव चिन्मात्रत्वात् ॥ ६ ॥ यस्मात्स्वातिरेकेण मनोऽस्तीति विभ्रमात् महाननर्थोजातस्तस्मात् नाविद्यास्तीह नो माया परं ब्रह्माहमस्मीति स्मरणस्य मनोनहीत्यादिश्रुत्यर्थसंस्कृतज्ञानदृष्ट्या मनोविलीयते मनस्यभावपदं गते तत्पथतत्कार्यसंकल्पतत्कार्यपुण्यपापादिदाहोभवति ततोजाग्रज्जाग्रदादिचतुःपंचदशकलनाग्रासः सदाशिवः ॥

ॐ शुक्लात्मकसर्वत्राथस्थितस्वयंज्योतिः शुद्धोनित्योनिरंजनः शांतभः प्रकाशयति ॥ ७ ॥ एष शुद्धः पूनः शून्यः शांतोऽप्राणोऽनीशात्माऽनंतोऽक्षय्यस्थिरः शाश्वतोऽजः स्वतंत्रः स्वे महिम्नि तिष्ठति ॥ ८ ॥ चक्षुषोद्रष्टा श्रोत्रस्य द्रष्टा मनसोद्रष्टा बुद्धेर्द्रष्टा प्राणस्य

द्रष्टा तमसोद्रष्टा सर्वस्य द्रष्टा ततः सर्वस्मादन्योवि लक्षणः सद्घनोऽयं चिद्घन आनंदघन एवैकरसोऽव्यवहार्यः ॥ ९ ॥ सन्मात्रोनित्यशुद्धोबुद्धः सत्योमूलोनिरंजनोविभुरद्वयानंदः परः प्रत्यगेकरसः ॥ १० ॥

(टीका) ॐ इतितुरीयोंकाररूपेण स्वमात्रमवशिष्यते कुत्रासनमर्हतीत्यत्र ब्रह्मप्रणवावयवभूतचतुःपंचदशकलनानिवर्तकशक्त्यात्मकः सन् स्वाविद्यापदे सर्वत्रावस्थितः स्वातिरिक्तसर्वगतोजडत्वाशुद्धत्वानित्यत्वसंगत्वादितमःप्रसक्तौ तदपन्हवसिद्धस्वयमेव स्वमात्रतया ज्वलति अतोऽयमजडः शुद्धोनित्योनिरंजनः शांततमोभूत्वा स्वाज्ञदृष्टिप्रसक्तस्वातिरिक्तकलनां प्रकाशयति ॥ एष परमात्मा स्वभावतः शुद्धः पूतः अंतःकरणशून्यः अतव्यापारकर्मज्ञानेंद्रियप्राणपंचकाभावात् शांतः स्वातिरिक्तप्रमाणाभावादप्राणः जीवरूपेणास्वतंत्रत्वादनीशात्मा अपरिच्छिन्नत्वादनन्तः षड्भावविकाराभावादक्षयः सत्तामात्रत्वात् शिवः चिरंतनत्वाच्छाश्वतः परमेश्वरत्वात् स्वतंत्रोवस्तुतोनिर्विशेषरूपः स्वे महिम्नि तिष्ठति ॥ ८ ॥ चक्षुरादिदशेंद्रियांतःकरणचतुष्टयप्राणादिपंचकतत्कारणतमसोपि भावाभावद्रष्टत्वादयमात्मा सर्वद्रष्टा सर्वसाक्षित्वात्तत स्वदृश्यात्सर्वस्मादन्योविलक्षणः स्वातिरिक्तानृतजडदुःखप्रपंचापन्हवात्सद्घनोऽयं चिद्घन आनंदघन एव सच्चिदानंदरसानां मिथोभिदाप्रसक्तावेकरसः व्यवहार्यप्रपंचाभावादव्यवहार्यः ॥९॥ सन्मात्रादिसत्यपदं व्याख्यानं व्याप्यसत्त्वे विभुर्व्यापकः द्वैतदुःखाभावादद्वयानंदः परः परमात्मा प्रत्यगेकरसः प्रत्यगभिन्न इत्यर्थः ॥ १० ॥

अदृष्टोऽव्यवहार्योप्यल्पोनाल्पः साक्ष्यविशेषः स्वयंज्ञो अनंतोऽभिन्नोऽद्वयोविदिताविदितात्परः ॥ ११ ॥

अद्वैतपरमानन्दो विभुर्नित्यो निष्कलंको निर्विकल्पो निरंजनो निराख्यातशुद्धो देव एकोनारायणो न द्वितीयोऽस्ति कश्चित्॥१२। अचक्षुर्विश्वतश्चक्षुरकर्णो विश्वतः कर्ण अपादोविश्वतः पाद अपाणिर्विश्वतः पाणिरहमशिरा विश्वतःशिरा विद्यामात्रैकसंश्रयोविद्यारूपः॥१३॥ दिव्योह्यमूर्तः पुरुषः सबाह्याभ्यंतरोह्यजः ॥ १४ ॥

(टीका) स्वातिरेकेण केनाप्यदृष्टः अनिदंस्वभावादव्यवहार्यः मन आद्युपाधिसत्त्वासत्त्वाभ्यामल्पोऽपि नाल्पः भूमरूपत्वात् साक्ष्यसत्त्वे साक्षी वस्तुतोनिर्विशेषः सर्वं जानातीति सर्वश्चासौ ज्ञश्चेति स्वातिरिक्तसर्वं नास्तीति वा सर्वज्ञः अनंत इत्यादिपदत्रयं व्याख्यातं मूर्तत्वेन विदितादमूर्तत्वेनाविदितादपि परः सर्वविलक्षणत्वात् ॥ ११ ॥ मायाकलंकाभावान्निष्कलंकः विश्वविश्वादिविकल्पाभावान्निर्विकल्पः स्वातिरिक्ताख्यासामान्याभावान्निराख्यातः देदीप्यमानत्वाद्देवः यत्र विद्यापदे सूरयो न रमंते तन्नारमविद्यापदतत्कार्यजातं तदपवादस्यायनमधिष्ठानं नारायण उच्यते स एक एव तस्य द्वितीयोन कश्चिदस्ति ॥ १२ ॥ स्वदृष्ट्यनुभूतनिर्विशेषरूपेण चक्षुरादिमस्तकांतकरणावयवविरलः सविशेषविराड्रूपेण समष्टिप्राणिचक्षुरादिमस्तकांतकरणावयवाविद्दृश्यते वस्तुतः स्वारोपितातन्निरासकविद्यामात्रैकसंश्रयोविद्यारूपः स्वातिरिक्तमानमेयाभावाद्विद्याश्रयत्वं विद्यारूपत्वं चोपपद्यत इत्यर्थः ॥१३॥ दिवि स्वे महिम्नि भवतीति दिव्यः सर्वमूर्तिवर्जितत्वादमूर्तः स्वकार्यपूरणात् पूरुषः स्वव्याप्यप्रपंचबाह्यांतरेण सह वर्तत इति सबाह्याभ्यंतरः अजरामृतस्वरूपत्वादजः हि शब्दः सापेक्षाजत्वव्यापकत्वनिरासकः क्रियाज्ञानेच्छाशक्त्यात्मकप्राणपंचकांतःकरणचतुष्टयाभावादप्राणोह्यमनाः प्रकाशमात्ररूपत्वाच्छुभ्रः क्षरप्रपंचा-

रोपाधारादक्षरादीश्वरात्परः त्तरापत्रादाधारः स साक्षी तस्मादपि परः परमात्मेत्यर्थः ॥ १४ ॥

अप्राणोह्यमनाः शुभ्रोह्यक्षरात्परतः परः ॥१५॥
अद्वैतः सर्वभावानां देवस्तुर्योविभुस्मृतः ॥१६॥
अपूर्वोऽनंतरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥ १७ ॥
अमात्रोऽनंतमात्रश्च द्वैतस्योपशमः शिवः ॥ १८ ॥
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलोनिर्गुणश्च ॥ १९ ॥
सर्वसंकल्परहितः सर्वनादमयः शिवः ॥ २० ॥
सर्ववर्जितचिन्मात्रः सर्वानंदमयः परः ॥ २१ ॥

( टीका ) विश्वविराडीशादिभावानां द्वैतवज्ज्ञानेऽपि तदपवादाधारोदेवस्तुर्योविभुरद्वैत इतिस्मृतः ॥१६॥ स्वतोऽन्यकारणाभावादपूर्वः तथाकार्याभावादनंतरः स्वव्यक्षपदार्थाभावादबाह्यः स्वपरस्वभावादनपरः नित्यत्वादव्ययः प्रणवः परमात्मावशिष्यत इत्यर्थः ॥ १७ ॥ अकारादिमात्राभावादमात्रः पराभिधानानंतमात्ररूपत्वादनंतमात्रः अभिधानाभिधेयरूपाशिवद्वैतस्योपशमः तदुपशमाधारः शिवः परमात्मेत्यर्थः ॥ १८ ॥ ईश्वरात्मना निखिलकर्मफलप्रदत्वात्कर्माध्यक्षः सर्वांतर्यामिरूपत्वात्सर्वभूताधिवासः सर्वप्रत्यग्रूपत्वात्साक्षी स्वसान्निध्यसामान्यं चेतयतीति साक्ष्येव चेता प्रत्यक्केवलशेषविशेषरहितः गुणत्रयाभावान्निर्गुणः च शब्दोनिष्प्रतियोगिकनिर्गुणत्वद्योतकः ॥ १९ ॥ मनःकरणाभावात्सर्वसंकल्परहितः चिदित्यादिप्रणवनादांतमयत्वात् वस्तुतस्तु शिव एवेत्यर्थः ॥२०॥ सर्वांतर्विवर्जितचिन्मात्रः परमात्मा सर्वदानंदमयजीवकोश्यभेदात्सर्वानंदमयः वस्तुतः परमात्मा तूलांतःकरणाविद्याकल्पितजगज्जीवेशसाक्ष्यंतसर्वानुभवनिर्मुक्तः देहादि

साक्ष्यंतसर्वध्यानविवर्जितः विश्वविश्वाग्रविकल्पानुसैकरसान्तमात्मा तदुपाधिजातमनात्मा तयोः सत्यासत्यधिया निश्चयोविवेकः आदिशब्देनाविद्याद्वयमुच्यते तयोरात्मानात्मनोः स्वज्ञस्वाज्ञदृष्टिभ्यां भेदाभेदौ स्त इत्यादिमोहवर्जितः महावाक्यजातस्य प्रत्यक्परैक्यमित्यर्थः तादृशैक्यवृत्तितोदूरः ब्रह्माहमस्मीति वृत्तितोप्यतिदूरः तत्त्वमसीति महावाक्यपदार्थवाक्यार्थगतहेयांशासंभवज्ञानसिद्धत्वेन पदवाक्यार्थविरलत्वात् तच्छब्दवर्ज्यस्त्वं शब्दहीनोवाक्यार्थवर्जितोनिर्विशेषः परमात्मेत्यर्थः ॥ २१ ॥

सर्वानुभवनिर्मुक्तः सर्वध्यानविवर्जितः ॥ २२ ॥
आत्मानात्मविवेकादिभेदाभेदविवर्जितः ॥ २३ ॥
महावाक्यार्थतोदूरोब्रह्मास्मीत्यतिदूरतः ॥ २४ ॥
तच्छब्दवर्ज्यस्त्वंशब्दहीनोवाक्यार्थवर्जितः ॥२५॥
क्षराक्षरविहीनोयोनादांतर्ज्योतिरेव सः ॥२६॥
अखंडैकरसोवाहमानन्दोऽस्मीति वर्जितः ॥२७॥
दृश्यदर्शननिर्मुक्तः केवलामलरूपवान् ॥ २८ ॥
नित्योदितोनिराभासोद्रष्टा साक्षी चिदात्मकः॥२९॥
स एव विदितादन्यस्तथैवाविदितादपि ॥ ३० ॥
सार्द्धानिकपुल्लिङ्गस्वरूपवाक्यानि त्रिंशत् ॥

अथ सार्द्धानिकस्त्रीलिंगस्वरूपमहावाक्यानि लिख्यंते । अलौकिकपरमानन्दलक्षणाखंडामिततेजोराशिः ॥ १ ॥

( टीका ) ॥२२॥२३॥२४॥२५॥ यः क्षरः प्रपंचस्तदारोपाधारोक्षरईश्वर इति विभागहीनोभवति सोऽयं ब्रह्म प्रणवनादांतर्वित्रोतमानतुर्यतुर्यज्योतिर्भवतीत्यर्थः ॥ २६ ॥ एवमाकारकसत्त्ववृत्तेरपि मायिकत्वात्तद्वर्जितत्वं युज्यत इत्यर्थः ॥ २७ ॥

दृश्यं घटादि तद्विषयज्ञानं दर्शनं तद्विनिर्मुक्तः केवलनिर्विशेषतया निर्मल इत्यर्थः ॥ १८ ॥ यस्त्वमात्रत्वेन नित्योदितः निराभासः उदयास्तमयाभासभावात् जीवरूपेण व्यष्टिप्रपंचद्रष्टा ईश्वररूपेण समष्टिप्रपंचसाक्षी वस्तुतश्चिदात्मकश्चिन्मात्रोभवति स एव स्वाविद्यापदस्थूलसूक्ष्मबीजप्रपंचाद्विदितादन्यः तथैव तदर्थमात्राप्रपंचादविदितादप्यन्यः स्वांतःकरणवेद्यावेद्यकलनाभावात् तदन्यत्वमुपपद्यत इत्यर्थः ॥३०॥ आहत्यवाक्यसंख्या एकषष्ठ्यधिकषट्शतम् ॥ ६६१ ॥ पुल्लिंगस्वरूपविवरणं संपूर्णम् ॥ ॐ अथ सार्द्धांतिकस्त्रीलिंगस्वरूपमहावाक्यानि लिख्यंते अलौकिकेत्यादि या अलौकिकपरमानन्दलक्षणा श्रेयं चिदखंडामिततेजोराशिरूपिणी पूर्णबोधात्मिका भवति ॥ १ ॥

भावाभावकलाविनिर्मुक्ता चिद्विद्या द्वितीयब्रह्मसंवित्तिः सच्चिदानन्दलहरी महात्रिपुरसुंदरी बहिरंतरनुप्रविश्य स्वयमेकैव विभाति ॥२॥ सर्वसंकल्परहिता सर्वसंज्ञाविवर्जिता ॥ ३ ॥ सैषा चिदविनाशात्मा स्वात्मेत्यादिकनाभिधा ॥४॥ आकाशशतभागाच्छा ज्ञेषु निष्कलरूपिणी ॥ ५ ॥ नास्तमेति नचोदेति नोत्तिष्ठति नतिष्ठति॥६॥नचयाति नचायाति नचनेह नचेह चित्॥७॥ सैषा चिदमलाकारा निर्विकल्पा निरास्पदा ॥ ८ ॥

( टीका ) श्रोत्रादिग्राह्यशब्दादिर्भावकला मन आदिग्राह्यसंकल्पादिरभावकला तदुभयनिर्मुक्ता मूर्तामूर्तविलक्षणत्वात् चिदस्मीति वेदनीयत्वाच्चिद्विद्या अद्वितीयत्वेनोपबृंहणात् ब्रह्मविद्भिरन्यैः संवेदनीयस्वरूपत्वादद्वितीयब्रह्मसंवित्तिः संविन्मात्रस्वरूपत्वादिदं मदित्यादिसच्चिदानन्दलहरीपूर्णप्रवाहरूपिणी भूर्भुवः स्वरिति त्रिपुरोपलक्षितानंतकोटिब्रह्मांडान्यधिष्ठाय या

शोभते सा महती च सा त्रिपुरसुंदरीच महात्रिपुरसुंदरीत्यत्र प्राजापत्यवैष्णवं विलयकारणं रूपमाश्रित्य भूर्भुवः स्वः त्रीणि त्रिपुराणि या व्याप्नोति सैवेयं भगवती त्रिपुरेति व्यापद्यत इतिश्रुतेः सेयं त्रिपुरासुंदर्यनंतकोटिब्रह्मांडानामन्तर्याम्यधिष्ठानात्मना बहिरंतरनुप्रविश्य वर्त्तते वस्तुतस्तु स्वावशेषतया सर्वं ग्रसित्वा स्वयमेकैव विभाति स्वस्यास्त्वद्वितीयत्वादित्यर्थः ॥ २ ॥ अंतःकरणवृत्तिजाताभावाद्या नानाविधसंकल्पविविधसंज्ञाजातविवर्जिता भवति सैषा चिदहमात्मा मत्तः किंचिन्न विद्यत इति स्वात्मेत्यादिकृताभिदासती निरवयवाकाशादपि शतभागाच्छाचिन्मात्ररूपत्वात् शेषु ब्रह्मात्मविद्वरिष्ठेषु प्राणादिनामांतषोडशकलाभावात् निष्कलरूपिणी कालत्रयेऽप्यविनाशात्माऽवशिष्यते स्वस्यासत्तासामान्यरूपत्वात्॥ ३ ॥ ४ ॥ ५ ॥ चित्तसकलत्वेनोदयास्तमयौ स्यातामित्यत आह नेति निर्विशेषब्रह्मरूपिणी चित्सूर्यादिवदुदयास्तमयादिविकृतिनेतिमूर्त्तामूर्त्तविलक्षणत्वेन निर्विकारत्वात् सैषा चित्प्रत्यगभिन्नब्रह्मरूपेणामलाकारा संकल्पाभावान्निर्विकल्पा स्वातिरिक्ताधिष्ठेयाभावान्निरास्पदा निरधिष्टानतयावशिष्यत इत्यर्थः ॥ ८ ॥

महाचिदेकैवद्वास्ति महासत्तेति चोच्यते ॥ ९ ॥
निष्कलंका समा शुद्धा निरहंकाररूपिणी ॥ १० ॥
सकृद्विभाता विमला नित्योदयवती समा ॥११॥
सा ब्रह्मपरमात्मेति नामभिः परिगीयते ॥ १२ ॥
सार्द्धांतिकस्त्रीलिंगस्वरूपवाक्यानि द्वादश ॥१३॥

अथ सार्द्धांतिकनपुंसकलिंगस्वरूपवाक्यानि अन्यदेवतद्विदितादथोअविदितादधि ॥ १ ॥ यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम् ॥ २ ॥

( टीका ) या महासत्तेति स्वेतरासदसत्तासामान्यरूपिणीति

गीयते या महती च साचिच्चेति महाचिदेकैवेहगस्ति परमाश्चर्यरूपत्वात् यानिष्कलंकेत्यादिविशेषणविशिष्टा माया कलंकाभावान्निष्कलंका तूलाविद्या कृतविषमा शुद्धाहंकाराभावात्समा शुद्धा निरहंकाररूपिणी सदाद्यावृत्तित्रयशून्यतया सकृद्विभाता सदाविभातेत्यर्थः अत एव विमला चिन्मात्रत्वात्स्वमात्रतया नित्योदयवती सैव चिद्ब्रह्म विश्वरिष्टैर्निर्विशेषं ब्रह्मेति निष्प्रतियोगिकपरमात्मेति च नामभिः सदा गीयते कथ्यत इत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ आहत्य वाक्यानि त्रिसप्तत्युत्तरपट्शतम् ॥ ६७३ ॥ स्त्रीलिंगस्वरूपमहावाक्यविवरणंसंपूर्णम् ॥१३॥ अथ सार्द्धांतिकनपुंसकलिंगस्वरूपवाक्यान्युच्यते अन्यदेवेत्यादिना बौद्धमीमांसकादिभिर्यद्देहत्वेन देहातिरिक्तजीवत्वेन जगज्जीवेशभेदवद्द्वैतत्वेन च विदितात् ब्रह्मणयादेव अथो विदितं ब्रह्मेति चेत्तत्राह अथो इति अथ शब्दो विकल्पार्थः व्यष्टिसमष्टितुर्ययोर्बौद्धादिभिरविदितत्वादविदितं ब्रह्मेति यदि तदा जगज्जीवेशादिवदात्मावरणाभेदप्रतीत्यत्रास्तवत्वसाम्यात् विदितविपरीतात् तुरीयादप्यधि अन्यदित्यर्थः ब्रह्मणस्तुरीयातीतत्वादित्यर्थः ॥ १ ॥ अचाक्षुषत्वाद्यदद्रेश्यमदृश्यमानिदं वस्तुत्वादग्राह्यं स्थूलदेहविलक्षणत्वादगोत्रमवर्णं ज्ञानकर्मेंद्रियातीतत्वादचक्षुःश्रोत्रं तदपाणिपादं ब्रह्मणोनिरवयवत्वेन शरीरात्रयातीतत्वात् ॥ २ ॥

सदेव सौम्येदमग्रआसीदेकमेवाद्वितीयम् ॥ ३ ॥ अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसंगमरसमगंधमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनंतरमबाह्यम् ॥ ४ ॥ नित्यं शुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानन्दचिन्मात्रं पुरतः सुविभातमद्वैतमचिंत्यमलिङ्गं स्वप्रकाशमानन्दघनम् ॥ ५ ॥

( टीका ) हेसौम्य श्वेतकेतो इदमाविद्यकं सद्विकल्पितं जगत् अग्रे सृष्टेः पुरा सृष्टिस्थितिलयानंतरमपि सदेव जगतः सदतिरिक्तसत्ताभावात् यत् व्यक्ताव्यक्तजगद्भावं तत्कि सजातीयविजातीयस्वगतभेदवदित्यत्राह एकशब्दः सजातीयभेदनिरासकः ब्रह्मांतराभावात् एवकाराविजातीयभेदनिरासकः गोमहिष्यादिवद्विजातीयाभावात् अद्वितीयशब्दस्तु स्वगतभेदनिरासकः ब्रह्मणोनिर्विशेषत्वेन नखकेशादिवत्स्वगतभेदवैरल्यात् सत्स्वमात्रमेवेत्यर्थः ॥ ३ ॥ बुद्धेरपि सूक्ष्मत्वादस्थूलं स्वादपि वृहत्वादनणु निष्परिमाणत्वादह्रस्वमदीर्घं रज आदिगुणत्रयाभावादलोहितं द्रवत्वाभावादस्नेहं अमूर्त्तत्वादच्छायं आविद्यकमोहाभावादतमः अभूतभौतिकत्वादवाय्वनाकाशं अरसमगंधमतेजस्कं स्वसज्जनीयस्वाविद्याद्याभावादसंगं ज्ञानकर्मेंद्रियाभावादचक्षुष्कमश्रोत्रमवाक् अतः करणाभावादमनः पंचप्राणोपप्राणाभावादप्राणं निरवयवत्वादमुखं अपरिच्छिन्नत्वादमात्रं अंतर्बाह्यकलनाभावादनंतरमबाह्यम् ॥ ४ ॥ सर्वस्मात्पुरतः स्वेनैव भातत्वात्सुविभातं सूर्यादिभिरभातत्वादविभातं अनिर्वचनीयत्वादचिंत्यं वेदांतेतरस्वगमकलिङ्गाभावादलिङ्गं विशिष्टपदान्युक्तार्थानि ॥ ५ ॥

एतच्चशब्दमस्पर्शमरूपमरसमगंधमव्यक्तमदातव्यमगंतव्यमविसर्जयितव्यमनानन्दयितव्यममंतव्यमबोद्धव्यमनहंकर्तयितव्यमचेतयितव्यमप्राणयितव्यमपानयितव्यमव्यानयितव्यमनुदानयितव्यमसमानयितव्यमनिंद्रियमविषयमकरणमलक्षणमसंगमगुणमविक्रियमव्यपदेश्यमसत्वमरजस्कमतमस्कममायमभयमप्यौपनिषदमेव सुविभातं सकृद्विभातं पुरतोऽस्मात्सुविभातमद्वयम् ॥ ६ ॥ अनिर्वचनीयज्योतिः सर्वव्यापकं निरतिशयानन्दलक्षणं परमाकाशम् ॥ ७ ॥

( टीका ) एतत्प्रत्यगभिन्नं ब्रह्मपंचतन्मात्राभावात् ज्ञानेंद्रियविषयाभावाच्चाशब्दमित्यादि कर्मेंद्रियविषयाभावात् ज्ञानेंद्रियविषयाभावाच्चाशब्दमित्यादि कर्मेंद्रियविषयाभावादव्यक्तमित्यादिमन आद्यंतःकरणविषयाभावादमन्तव्यमित्यादिप्राणपंचकविषयाभावादप्राणयितव्यमित्यादिश्रोत्रादिदशेंद्रियाभावादनिंद्रियं तद्विषयं ताद्विषयसामान्याभावादविषयं मनआद्यंतःकरणाभावादकरणं स्वातिरिक्तलक्षणाभावादलक्षणं सज्जनीयाभावादसङ्गं गुणसाम्याभावादगुणं कर्त्तव्याभावादविक्रियं निर्विशेषत्वादव्यपदेश्यं सत्वादिगुणत्रयाभावादसत्यमित्यादिनिर्मायत्वादमायं अद्वयत्वादभयं स्वारोपितातन्निरासतः उपनिषदेकवेद्यत्वादौपनिषदं निराकृतत्वात्सकृद्विभावं सर्वस्मादस्मात्स्वातिरिक्तविषयगोचरवृत्तिसमूहादपि पुरतः पूर्वमेव प्रत्यग्रूपेण सुविभातमद्वयं ब्रह्मेत्यर्थः ॥ ६ ॥ अवाङ्मनसगोचरब्रह्मरूपेण ज्वलतीत्यनिर्वचनीयज्योतिः व्याप्यमत्वेनैतत्सर्वव्यापकं भूमानन्दतया लक्षणीयत्वान्निरतिशयानन्दलक्षणं भूताकाशकारणत्वात् परमाकाशं चिदाकाशमित्यर्थः ॥ ७ ॥

तद्ब्रह्मतापत्रयातीतं षट्कोशविनिर्मुक्तं षडूर्मिवर्जितं पंचकोशातीतं षड्भावविकारशून्यमेवमादिसर्वविलक्षणम् ॥ ८ ॥ निर्गुणं निरुपलवं ज्योतिराभ्यंतरं सर्वमायातीतमप्रत्यगेकरसमद्वितीयम् ॥ ९ ॥ तज्ज्योतिरेकमद्वितीयं सर्वकल्पनातीतं ध्रुवमक्षरमेकं सदा च कास्ति सच्चिदानंदम् ॥ १० ॥ यत्तत्सत्यं विज्ञानमानन्दन्निष्क्रियं निरंजनं सर्वगतं सुसूक्ष्मं सर्वतोमुखमनिर्देश्यममृतं निष्कलम् ॥ ११ ॥ एकमद्वैतन्निष्कलं निष्क्रियं शांतं निरतिशयमनामयमद्वैतं चतुर्थं ब्रह्मविष्णुरुद्रातीतमेकमाशास्यम् ॥ १२ ॥

( टीका ) तत्पदलक्ष्यं ब्रह्माध्यात्मिकादितापत्रयातीतं आत्मानं देहमधिकृत्य भवतीत्यध्यात्मं शिरोरोगादिभूतपंचकतत्कार्यमधिकृत्य भवतीत्याधिभौतिकं वर्षातपादिदिग्वातादिकरणादैवमधिकृत्य भवतीत्याधिदैविकं कर्णाक्षिरोगादि षट्कोशविनिर्मुक्तं त्वगाद्यभावात् त्वग्रुधिरमांसमेदोमज्जास्थीनि षट्कोशाः अशनाद्यभावात् षडूर्मिवर्जितं अशनायापिपासाशोकमोहजरामरणानीति षडूर्मयः अन्नमयाद्यभावात्पंचकोशातीतं अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयाः पंचकोशाः जायतेऽस्तीत्यादिविकाराभावात्षड्भावविकारशून्य एवमादिसर्वविलक्षणं आदिशब्देन पंचदोषादिवर्जितमिति द्योत्यते ॥ ८ ॥ स्थूलशरीराभावान्निरुपप्लवं निरूपद्रवं यद्वा जाग्रज्जाग्रदादिपंचदशावस्थाऽगाधसागरे विश्वविश्वाद्यविकल्पानुज्ञैकरसांतरूपेण प्लवते ननिमज्जतीत्युपप्लवो विश्वादिस्तद्गतहेयांशाभावादुपप्लवातीतं अतिप्रकाशादाभ्यंतरं ज्योतिः माया तत्कार्यसत्वे सर्वमायातीतं स्वातिरिक्तप्रत्यग्रसाभावाद्प्रत्यगेकरसं प्रत्यगभिन्नत्वात् ॥ ९ ॥ स्वातिरिक्तकल्पकजीवजाताभावात्सर्वकल्पनातीतं सन्मात्रत्वाद्ध्रुवं सच्चिदानंदमक्षरं ब्रह्म सदा चकास्ति प्रकाशत इत्यर्थः ॥ १० ॥ कालत्रयाबाध्यत्वाद्यत्तत्सत्यं विज्ञप्तिमात्रत्वाद्विज्ञानं सर्वव्यापकत्वात्सर्वगतं केशकोट्यंशैकभागादपि सुसूक्ष्मं वैराजत्वात्सर्वतोमुखं स्वातिरेकेण निर्देष्टुमशक्यत्वादनिर्देश्यम् ॥ ११ ॥ निर्विशेषत्वान्निरतिशयं आमयाद्यदेहाभावादनामयं तुर्यरूपत्वाद्ब्रह्मविष्णुरुद्रातीतं ब्रह्मादिभिरप्याशास्यमानमद्वैतमेकमवशिष्यते ॥ १२ ॥

अद्वयमनाद्यंतमशेषवेदवेद्यमनिर्देश्यमनिरुक्तमप्रत्ययमाशास्यमद्वैतं चतुर्थं सर्वाधारमनाधारमनिंद्रियम् ॥ १३ ॥

( टीका ) एतत्प्रत्यगभिन्नं ब्रह्मपंचतन्मात्राभावात् ज्ञानेंद्रियविषयाभावाच्चाशब्दमित्यादिकर्मेंद्रियविषयाभावात् ज्ञानेंद्रियविषयाभावाच्चाशब्दमित्यादिकर्मेंद्रियविषयाभावादव्यक्तमित्यादिमन आद्यंतःकरणविषयाभावादमन्तव्यमित्यादिप्राणपंचकविषयाभावादप्राणयितव्यमित्यादिश्रोत्रादिदशेंद्रियाभावादनिंद्रियं तद्विषयं तद्विषयसामान्याभावादविषयं मनआद्यंतःकरणाभावादकरणं स्वातिरिक्तलक्षणाभावादलक्षणं सज्जनीयाभावादसङ्गं गुणसाम्याभावादगुणं कर्त्तव्याभावादविक्रियं निर्विशेषत्वादव्यपदेश्यं सत्वादिगुणत्रयाभावादसत्यमित्यादिनिर्मायत्वादमायं अद्वयत्वादभयं स्वारोपितातन्निरासतः उपनिषदेकवेद्यत्वादौपनिषदं निराकृतत्वात्सकृद्विभातं सर्वस्मादस्मात्स्वातिरिक्तविषयगोचरवृत्तिसमूहादपि पुरतः पूर्वमेव प्रत्यग्रूपेण सुविभातमद्वयं ब्रह्मेत्यर्थः ॥ ६ ॥ अवाङ्मनसगोचरब्रह्मरूपेण ज्वलतीत्यनिर्वचनीयज्योतिः व्याप्यसत्येनैतत्सर्वव्यापकं भूमानन्दतया लक्षणीयत्वान्निरतिशयानन्दलक्षणं भूताकाशकारणत्वात् परमाकाशं चिदाकाशमित्यर्थः ॥ ७ ॥

तद्ब्रह्मतापत्रयातीतं षट्कोशविनिर्मुक्तं षडूर्मिवर्जितं पंचकोशातीतं षड्भावविकारशून्यमेवमादिसर्वविलक्षणम् ॥ ८ ॥ निर्गुणं निरुपप्लवं ज्योतिराभ्यंतरं सर्वमायातीतमप्रत्यगेकरसमद्वितीयम् ॥९॥ तज्ज्योतिरेकमद्वितीयं सर्वकल्पनातीतं ध्रुवमक्षरमेकं सदावकास्ति सच्चिदानंदम् ॥ १० ॥ यत्तत्सत्यं विज्ञानमानन्दन्निष्क्रियं निरंजनं सर्वगतं सुसूक्ष्मं सर्वतोमुखमनिर्देश्यममृतं निष्कलम् ॥ ११ ॥ एकमद्वैतन्निष्कलं निष्क्रियं शांतं निरतिशयमनामयमद्वैतं चतुर्थं ब्रह्मविष्णुरुद्रातीतमेकमाशास्यम् ॥ १२ ॥

( टीका ) तत्पदलक्ष्यं ब्रह्माध्यात्मिकादितापत्रयातीतं आत्मानं देहमधिकृत्य भवतीत्यध्यात्मं शिरोरोगादिभूतपंचकतत्कार्यमधिकृत्य भवतीत्याधिभौतिकं वर्षातपादिदिग्वातादिकरणदैवमधिकृत्य भवतीत्याधिदैविकं कर्णाक्षिरोगादि षट्कोशविनिर्मुक्तं त्वगाद्यभावात् त्वग्रुधिरमांसमेदोमज्जास्थीनि षट्कोशाः अशनाद्यभावात् षडूर्मिवर्जितं अशनायापिपासाशोकमोहजरामरणानीति षडूर्मयः अन्नमयाद्यभावात्पंचकोशातीतं अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयाः पंचकोशाः जायतेऽस्तीत्यादिविकाराभावात्षड्भावविकारशून्य एवमादिसर्वविलक्षणं आदिशब्देन पंचदोषादिवर्जितमिति द्योत्यते ॥ ८ ॥ स्थूलशरीराभावान्निरुपप्लवं निरूपद्रवं यद्वा जाग्रज्जाग्रदादिपंचदशावस्थाऽगाधसागरे विश्वविश्वाद्यविकल्पानुज्ञैकरसांतरूपेण प्लवते ननिमज्जतीत्युपप्लवो विश्वादिस्तद्गतहेयांशाभावादुपप्लवातीतं अतिप्रकाशादाभ्यंतरं ज्योतिः माया तत्कार्यसत्वे सर्वमायातीतं स्वातिरिक्तप्रत्यग्प्रसाभावादप्रत्यगेकरसं प्रत्यगभिन्नत्वात् ॥ ६ ॥ स्वातिरिक्तकल्पकजीवजाताभावात्सर्वकल्पनातीतं सन्मात्रत्वाद्ध्रुवं सच्चिदानंदमक्षरं ब्रह्म सदा चकास्ति प्रकाशत इत्यर्थः ॥ १० ॥ कालत्रयाबाध्यत्वाद्यत्तत्सत्यं विज्ञप्तिमात्रत्वाद्विज्ञानं सर्वव्यापकत्वात्सर्वगतं केशकोट्यंशैकभागादपि सुसूक्ष्मं वैराजत्वात्सर्वतोमुखं स्वातिरेकेण निर्देष्टुमशक्यत्वादनिर्देश्यम् ॥ ११ ॥ निर्विशेषत्वान्निरतिशयं आमयाद्यदेहाभावादनामयं तुर्यरूपत्वाद्ब्रह्मविष्णुरुद्रातीतं ब्रह्मादिभिरप्याशास्यमानमद्वैतमेकमवशिष्यते ॥ १२ ॥

अद्वयमनाद्यंतमशेषवेदवेदांतवेद्यमनिर्देश्यमनिरुक्तमप्रच्यवमाशास्यमद्वैतं चतुर्थं सर्वाधारमनाधारमनिरीक्ष्यम् ॥ १३ ॥

अशब्दमस्पर्शमरूपमव्ययं तथा रसन्नित्यमगन्धवच्चयत् १४
परं विज्ञानाद्वरिष्ठं प्रजानां यदर्चिमद्यदणुभ्योऽणु च १५
बृहच्च तद्दिव्यमचिंत्यरूपं सूक्ष्माच्चतत्सूक्ष्मतरं विभाति १६
एतत् ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किंचित् ॥ १७ ॥
अघोषमव्यंजनमस्वरं च यत्तालुकंठोष्ठमनासिकं च यत्
अरेफजातमुभयोष्मवर्जितं यदक्षरन्न च्चरते कथंचित् १९

(टीका) उत्पत्तिप्रलयाभावादनाद्यनंतं ब्रह्मेंद्रादिरूपेण स्वेनैव रूपेण च अशेषवेदवेदांतवेद्यं बीजाज्ञानाभावादनिरुक्तं कदापि स्वमात्रतोऽच्युतत्वादमव्ययं स्वाज्ञदृष्टिविकल्पितसर्वप्रपंचतत्वे तत्सर्वाधारं वस्तुतस्त्वनाधारं ब्रह्माहमस्मीति भावनां विना अनिरीक्ष्यम् ॥ १३ ॥ व्यवत्वद्वियदादिपंचभूततत्कार्याभावाद्यदव्ययं ब्रह्माशब्दमित्यादिविशेषणविशिष्टं यत्प्रजानां तमआदिगुणविशिष्टानां स्वाज्ञानानुरोधेन स्वातिरिक्तवस्तुविषयकविज्ञानात्परं वरिष्ठं अग्निमाणस्वाद्यच्चंद्रसूर्यादेरप्यर्चिमत्स्वयं प्रकाशत्वात् यदणुरूपबुद्धिवृत्तिभ्यो अणुच खादेरपि बृहच्च यत् तदचिन्त्यरूपं ब्रह्म दिवि स्वे महिम्नि भवतीति दिव्यं स्वप्रष्ठान्तराभावात् । स्तम्भादिसूक्ष्मजन्तुपर्यन्तं निर्विशेषतया सूक्ष्मपर्यन्तं विभाति प्रत्यगभिन्नब्रह्मरूपेण नित्यमेवात्मसंस्थमेतन्निर्विशेषब्रह्मैव स्वमात्रमिति ज्ञेयं नातः परं वेदितव्यं किञ्चिदप्यस्ति तस्य निष्प्रातियोगिकस्वमात्रत्वात्॥ १७॥ यत्परमाक्षरं ब्रह्म प्रयत्नाविशेषाभावादघोषं हलसंज्ञिकवर्णाभावादव्यञ्जनं अकारादिस्वराभावादस्वरं शर्षसहादिप्रयत्नाभावादुभयोष्मवर्जितं रादिप्रत्याहाराभावादरेफजातं वाक्कंठताल्वोष्ठविकारैर्यन्नक्षरते तत्परमाक्षररूपेणावशिष्यत इत्यर्थः ॥ १८ ॥ १९ ॥

१ शषसहा ऊष्माणः वर्गे वर्गे प्रथमाद्वितीयौ युग्मौ सोष्माणावनुनासिकोऽन्त्य इति प्रातिशाख्येऽनेकविधा ऊष्माणः ।

अगोचरं मनोवाचामवधूतादिसंप्लवम् ॥ २० ॥
सत्तामात्रप्रकाशैकप्रकाशं भावनातिगम् ॥ २१ ॥
अहेयमनुपादेयमसामान्यविशेषणम् ॥ २२ ॥
ध्रुवं स्तिमितगंभीरमतेजोन तमस्ततम् ॥ २३ ॥
निष्कलं निर्मलं शान्तं सर्वातीतन्निरामयम् ॥२४॥
नशून्यं नापि चाकारि नदृश्यन्नापि दर्शनम् ॥२५॥
चिन्मात्रं चैत्यरहितमनन्तमजरं शिवम् ॥ २६ ॥
चैत्यानुपातरहितं सामान्येन च सर्वगम् ॥ २७ ॥
अनामयमनाभासमनामकमकारणम् ॥ २८ ॥
मनोवाचोभिरग्राह्यं पूर्णात्पूर्णं सुखात्सुखम् ॥२९॥
द्रष्टृदर्शनदृश्यादिवर्जितं तदिदं पदम् ॥ ३० ॥

(टीका) वागादिकरणाविषयत्वान्मनोवाचामगोचरं तत्के-नासादितुं शक्यमित्यत्र अवधूतादिकुटीचक्रांतानां स्वातिरिक्तसंसार-सागरसंतारणदंडसंप्लवं किंतत् अशेषप्रपंचापवादाधारप्रत्यगभि-न्नसत्तामात्रब्रह्माहमस्मीति प्रकाशोबोधस्तत्प्रकाशकतयैकप्रकाशं स्वमात्रभावनां विना स्वातिरिक्तभावनातिगम् ॥२०॥ हेयरूपगु-णत्रयाभावादहेयं उपादेयगुणसाम्याभावादनुपादेयं अमूर्तं सामान्यं मूर्तं विशेषरूपं तदुभयवर्जितमसामान्यविशेषणं कूटस्थत्वाद्ध्रुवं निस्तरंगचिदब्धित्वात्स्तिमितगंभीरं सर्वव्यापकत्वात् ततं भूतभौति-कतेजस्तमोविलक्षणत्वादतेजोन तमः किंतत्स्वाज्ञविकल्पितसर्वसत्वे सर्वातीतं निष्कलं ब्रह्मेत्यर्थः ॥२१॥२२॥२३॥२४॥ बीजाज्ञाना-भावान्नशून्यं तद्विकल्पितनामरूपप्रपंचाभावान्नापि चाकारि विषय-विषयिज्ञानाभावान्न दृश्यं नापि दर्शनं चेतोभवं चैत्यं तत्कलना-रहितं चिन्मात्रं विशेषणसामान्येन वा सर्वगतमपि चैत्यसंबन्धविरलं स्वातिरिक्ताभासाभावादनाभासन्नामरूपवत्कार्याभावादनामकमकारणं

पूर्णादाकाशादपि पूर्णं आकाशादिव्यापकत्वात् सातिशयसुखादपि सुखं ब्रह्मसुखस्य निरतिशयत्वात् यत्पदं दृष्ट्यादित्रिपुटी विरलं तादिदं ब्रह्मेत्यर्थः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

शुद्धं सूक्ष्मं निराकारं निर्विकारं निरंजनम् ॥ ३१ ॥
अप्रमाणमनिर्देश्यमप्रमेयमतींद्रियम् ॥ ३२ ॥
निर्लेपकं निरापायं कूटस्थमचलं ध्रुवम् ॥ ३३ ॥
सद्घनं चिद्घनं नित्यमानन्दघनमव्ययम् ॥ ३४ ॥
प्रत्यगेकरसं पूर्णमनन्तं विश्वतोमुखम् ॥ ३५ ॥
अहेयमनुपादेयमनादेयमनाश्रयम् ॥ ३६ ॥
शुद्धं बुद्धं सदा मुक्तमनामकमरूपकम् ॥ ३७ ॥

संकल्पसंक्षयवशाद्गलिते तु चित्ते संसारमोहमिहिका गलिता भवंति ॥ ३८ ॥

स्वच्छं विभाति शरदीव खमागतायां चिन्मात्रमेकमजमाद्यमनन्तमन्तः ॥ ३९ ॥

सार्द्धीतिकनपुंसकलिंगस्वरूपवाक्यान्येकोनचत्वारिंशत् ॥ ४० ॥

( टीका ) प्रत्यक्षादिप्रमाणागम्यत्वादप्रमाणं स्वातिरिक्तप्रमेयाभावादप्रमेयं इंद्रियागम्यत्वादतींद्रियं स्वाविद्या तत्कार्यलेपाभावान्निर्लेपकं नित्यत्वान्निरापायं प्रत्यगभिन्नत्वात्प्रत्यगेकरसं विराट्त्वाद्विश्वतोमुखं स्वाधेयाधाराभावान्निराधेयं अनाश्रयं नामरूपकलनाभावादनामकमरूपकं स्वाविद्यातत्कार्याभावात्सदामुक्तमेवेत्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ संकल्पाभावान्मनोऽपि नाशमेति तत्कार्यसंसारमोहनीहारोऽपि विलीयते शरद्यागतायां यथा खं स्वच्छं विभाति तथा स्वांतर्हृदये निर्विशेषतयाऽयं चिन्मात्र स्वच्छं विभाति इत्यर्थः ॥ ३८ ॥ ३९ ॥

आदृत्य वाक्यानि सप्तशतं नपुंसकलिङ्गप्रकरणं संपूर्णम् ॥ अथ सार्द्धांतिकात्मस्वरूपमहावाक्यानि लिख्यन्ते आकाश इत्यादिना आ समन्तात्काशत इत्याकाशः नामचिद्धातुः स्वात्मस्थजगद्बीजभूतनामरूपयोर्निर्वहिता तदाधारत्वात् ।

अथ सार्द्धांतिकात्मस्वरूपवाक्यानि आकाशोह वै नामनामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्म तदमृतं स आत्मा ॥ १ ॥ इदं सर्वं यदयमात्मा ॥ २ ॥ चिदेकरसोह्ययमात्मा ॥ ३ ॥ अतोह्ययमात्मा ॥ ४ ॥ अनुज्ञाताह्ययमात्मा ॥ ५ ॥ अनुज्ञैकरसोह्ययमात्मा ॥ ६ ॥ अविकल्पोह्ययमात्मा ॥ ७ ॥ देहादेःपरतरत्वाद्ब्रह्मैव परमात्मा ॥ ८ ॥ अखंडैकरसोह्ययमात्मा ॥ ९ ॥ निर्गुणः साक्षीभूतोनिष्क्रियोनिरवयवात्मा ॥ १० ॥ विरजः पर आकाशोह्यज आत्मा महान् ध्रुवः ॥ ११ ॥

( टीका ) ते नामरूपे यदंतरा यन्मध्ये रज्जुसर्पवद्विकल्पिते स्वयमसद्रूपे अपि तत्सत्तया सत्यवदेव भाते तदारोपापवादाधिकरणं यत्तद्ब्रह्म तस्यैव मुक्तिरूपत्वात् तदेवामृतं तस्यैव प्रत्यग्रूपेण कामादिवृत्त्यवभासकत्वात्स एव निष्प्रतियोगिकात्मेत्यर्थः ॥ १ ॥ स्वाज्ञदृष्टिविकल्पितं यदिदं परिदृश्यमानं सर्वं जगत् तदपवादात्पदशदृष्ट्या चिदेकरसोऽयमात्मादिः ॥२॥ ३ ॥ व्यष्टिसमष्टिविश्वविराडैक्यनिष्पन्नात्मातोहि स्थूलप्रपंचव्यापकत्वात् तैजससूत्रैक्यानुज्ञां ददातीत्यर्थमात्मानुज्ञाताहि प्राज्ञबीजात्मनोरैक्यानुज्ञां दत्त्वा तदेकरसरूपेण 'योविराजते सोऽयमात्मानुज्ञैकरसोहि स्थूलसूक्ष्मबीजप्रपंचव्यष्टिसमष्टिविकल्पप्रासतुर्ययोरैक्यनिष्पन्नोऽयमात्मा अविकल्पोहि सदा निर्विकल्पत्वादित्यर्थः ॥४॥५॥६॥७॥ व्यष्टिसमष्टिदेहादिभावमापन्नपिंडांडब्रह्मांडयोः परतरत्वात् परत्वे-

नोपबृंहणात् ब्रह्मैव परमात्मा ॥ ८ ॥ अयमात्मा निष्प्रतियोगिकाखंडानन्दरसोहि स्वाज्ञदृष्टिविकल्पितगुणत्रयविजृंभितविक्रियावत्सात्रयवरूपसाक्ष्यसत्वे स्वदृष्ट्या निर्गुणः सर्वसाक्षीभूतः सदा निष्क्रियोव्योमवन्निरवयवात्मा भवति ॥ १० ॥ रजआदिगुणत्रयाभावाद्विरजः स्वच्छः निरवयवाकाशादपि परः तदपवादाधारत्वात् महानपरिच्छिन्नः ध्रुवोनित्यः ॥ ११ ॥

एकोदेवः सर्वभूतेषुगूढः सर्वव्यापी सर्वभूतान्तरात्मा॥१२॥
निःशब्दं परमं ब्रह्म परमात्मासमीर्यते ॥ १३ ॥
सकले निष्कले भावे सर्वआत्मा व्यवस्थितः ॥१४॥
सर्वदा सर्वकृत्सर्वः परमात्मेत्युदाहृतः ॥ १५ ॥
अनाद्यंतावभासात्मा परमात्मेह विद्यते ॥ १६ ॥
नित्यः सर्वगतोह्यात्मा कूटस्थोदोषवर्जितः ॥१७॥
तत्परः परमात्मा च श्रीरामः पुरुषोत्तमः ॥ १८ ॥
सर्वकारणकार्यात्मा कार्यकारणवर्जितः ॥ १९ ॥
सर्वातीतस्वभावात्मा नादांतर्व्यतिरेच सः ॥२०॥
निर्विकल्पस्वरूपात्मा सविकल्पविवर्जितः ॥२१॥

( टीका ) अद्वैतत्वादेकः देदीप्यमानत्वाद्देवः ब्रह्मादिस्तंबांतभूतमत्यगपि स्वाज्ञदृष्ट्या सर्वभूतेषु गूढः व्याप्यसत्वे तत्सर्वव्यापी सर्वांतर्यामित्वेन सर्वभूतान्तरात्मा ॥ १२ ॥ शब्दगुणकाकाशविलक्षणत्वान्निःशब्दं परमं ब्रह्मैव परमात्मोच्यते ॥ १३ ॥ स्वाज्ञदृष्टिविकल्पितसकले स्वाज्ञभक्तिस्वपदप्राप्त्युपायप्रदर्शनानंतरं ततः स्वान्यस्वज्ञोभवति तद्दृष्ट्या निष्कले भावे याते सत्यथ तद्दृष्ट्या सर्वत्र स्वान्यस्वज्ञदशायां स्वात्मैवावस्थितः स्वात्मांतरस्य मुख्यत्वात् ॥ १४ ॥ स्वाज्ञदृष्ट्या यः सदा सर्वं करोति स्वज्ञदृष्ट्या सर्वः परमात्मेति कथितं इत्यर्थः ॥ १५ ॥ इह संसारदशा-

यामपि आदिमध्यांतशून्यतया प्रकाशमात्रः परमात्मा विद्यते ॥१६॥ स्वातिरिक्तप्रभवसर्वदोषवर्जित इत्यर्थः ॥ १७ ॥ योऽज्ञदृष्टिविकल्पिताकारादिकलातीतांतमात्रातदध्यक्षजांत्रवदादिसीतांतभेदो विभाति स्वज्ञदृष्ट्या यं तत्परः परमात्मा च शब्दोनिष्प्रतियोगिकव्यापकः स्वातिरिक्ताश्रयपन्हवसिद्धमुक्तिश्रीरूपेण योराजमानोमहीयते स श्रीराम इत्यत्र स्वान्याश्रयपन्हवसिद्धा यामुक्तिश्रीर्विजृम्भते तद्रूपतोराजमानमहः श्रीराम ईरितमितिस्मृतेः क्षराक्षरातीतत्वात्पुरुषोत्तमः ॥१८॥ स्वाज्ञदृष्ट्या कार्यकारणवद्भासमानोऽपि स्वज्ञदृष्ट्या कार्यकारणवर्जितः परमार्थदृष्ट्या सर्वातीतस्वभावात्मा नानाप्रपञ्चापवादास्पदं नादः तुरीयात्मा यस्तदंतर्ज्योतिः स तुरीयातीत एवेत्यर्थः ॥१९।२०॥ विकल्पजुष्टप्रपंचाभावान्निर्विकल्पस्वरूपः बाह्यांतर्विक्षेपाभावात्सदा समाधिशून्यात्मा विक्षेपो-नास्ति यस्मान्नचसमाधिस्ततोममेतिश्रुतेः ॥२१॥

सदा समाधिशून्यात्मा आदिमध्यांतवर्जितः ॥ २२ ॥
प्रज्ञानवाक्यहीनात्मा अहं ब्रह्मास्मि वर्जितः ॥ २३ ॥
तत्त्वमस्यादिहीनात्मा अयमात्मेत्यभावकः ॥ २४ ॥
ॐकारवाच्यहीनात्मा सर्ववाच्यविवर्जितः ॥ २५ ॥
सर्वत्र पूर्णरूपात्मा सर्वत्रात्मावशेषकः ॥ २६ ॥
शुद्धचैतन्यरूपात्मा सर्वसिद्धिविवर्जितः ॥ २७ ॥
आनंदात्मा प्रियोह्यात्मा मोक्षात्मा बंधवर्जितः ॥ २८ ॥
शून्यात्मा सूक्ष्मरूपात्मा विश्वात्मा विश्वहीनकः ॥२९॥
सत्तामात्रस्वरूपात्मा नान्यत्किंचिज्जगद्भयम् ॥ ३० ॥
अपरिच्छिन्नरूपात्मा अणुस्थूलादिवर्जितः ॥ ३१ ॥
नामरूपविहीनात्मा परसंवित्सुखात्मकः ॥ ३२ ॥
साक्ष्यसाक्षित्वहीनात्मा किंचित्किंचिन्नकिंचन ॥ ३३ ॥

( टीका ) नेत्रादिसर्वेंद्रियमद्वितिनिमित्तत्वात्मज्ञानं ब्रह्मादिरूपे स्वयमेवोपवृंहणाद्ब्रह्मव्यष्टिप्रपंचापवादास्पदं प्रत्यगहं शब्दार्थः समष्टिप्रपंचापवादाधारः परोक्षब्रह्मशब्दार्थः अस्मीति शब्दस्तु तयोरैक्यबोधकः तत्पदलक्ष्यं ब्रह्म त्वंपदलक्ष्यं प्रत्यक्तयोरैक्यबोधकमसि पदं अयमित्यपरोक्षार्थः प्रत्यगात्मार्थः ब्रह्मशब्दार्थः परमात्मा ॐकारवाच्योविश्वविराडीशादिः सर्ववाच्यस्तु पटघटादिः ब्रह्मणोव्यावित्थपदवाक्यार्थत्वात्प्रज्ञानादिवाक्यहीनत्वं युज्यत इत्यर्थः॥२१॥२४॥ स्वाप्यप्रपंचाभावात्सर्वत्र पूर्णरूपात्मा स्वातिरिक्तेषु सत्स्वपि स्वयमेवावशेषणात् सर्वत्रात्मावशेषकः अशुद्धमायाभावाच्छुद्धचैतन्यरूपात्मा स्वातिरिक्तसिद्धजालाभावात्सर्वत्र सिद्धिविवर्जितः दुःखसामान्याभावादानन्दात्मा सर्वस्मात्प्रेयोरूपादात्मैव प्रियोपि बंधवर्जनान्मोक्षात्मा, स्वातिरिक्तप्रपंचशून्यात्मा कार्यापेक्षया, कारणात्मना सूक्ष्मात्मा, कार्यात्मना विश्वात्मा, वस्तुतोविश्वहीनकः स्वातिरिक्तप्रपंचसत्ताप्रदानात्सत्तामात्रस्वरूपात्मा भीहेतुद्वैताभावान्यत्किंचिज्जगद्भयं स्वस्यैव निर्भयत्वात् ॥ २५ ॥ २६ ॥ २७ ॥ ॥ २८ ॥ २९ ॥ ३० ॥ अणुस्थूलादिपरिमाणाभावादपरिच्छिन्नरूपात्मा सच्चिदानंदत्वान्नामरूपविहीनात्मा ॥ ३१ ॥ ३२ ॥ निष्प्रतियोगिकत्वात्साक्ष्यसाक्षित्वहीनात्मा ब्रह्मणोऽतिरिक्तं न किंचिदस्ति ॥ ३३ ॥

मुक्तामुक्तस्वरूपात्मा मुक्तामुक्तविवर्जितः ॥ ३४ ॥
द्वैताद्वैतस्वरूपात्मा द्वैताद्वैतविवर्जितः ॥ ३५ ॥
निष्कलात्मा निर्मलात्मा बुद्धात्मा पुरुषात्मकः ॥३६॥
आत्मेतिशब्दहीनोय आत्माशब्दार्थवर्जितः ॥ ३७ ॥
सच्चिदानंदहीनोय एवंचात्मा सनातनः ॥ ३८ ॥
यस्य किंचिद्बहिर्नास्ति किंचिदंतः कियन्नच ॥ ३९ ।

यस्य लिंगं प्रपंचं वा ब्रह्मैवात्मा नसंशयः ॥ ४० ॥

सार्द्धाग्निकात्मस्वरूपवाक्यानि चत्वारिंशत् अथ सार्द्धातिकसर्वस्वरूपवाक्यानि ॐकार एवेदं सर्वम् ॥१॥ सएवाधस्तात्सपश्चात्सपुरस्तात्सदक्षिणतः स उत्तरतः सएवेदंसर्वम् ॥२॥ अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणत अहमुत्तरतअहमेवेदं सर्वम् ॥ ३ ॥

( टीका ) स्वज्ञस्वाज्ञदृष्ट्या मुक्तामुक्तवद्द्वैताद्वैतवद्वास्थितोऽपि परमार्थदृष्ट्या मुक्तामुक्तद्वैताद्वैतकलनाविवर्जितः निर्विशेषपुराणपुरुषत्वात् ॥३४॥ ३५ ॥ ३६ ॥ आत्मेति सच्चिदानंद इतिशब्द-शब्दार्थहीनोभवति स एव निष्प्रतियोगिकः परमात्मा ॥ ३७ ॥ ॥ ३८ ॥ यस्य बाह्यांतरालकलना न विद्यते स्वाज्ञदृष्टेरपि यत्सत्त्वे जगल्लिंगमाहुः कार्यावगतेः कारणावगतिपूर्वकत्वात् वस्तुतः कार्यकारणकलनाविरलं ब्रह्मैव सर्वप्रत्यगात्माभवतीत्यत्र नहि संशयोस्तीत्यर्थः ॥ ३९ ॥ आहत्य वाक्यसंख्याचत्वारिंशोत्तरसप्तशतम् ॥ ४० ॥ अथ सार्द्धातिकसर्वस्वरूपवाक्यानि लिख्यन्ते परिदृश्यमानमिदमभिधानाभिधेयरूपमविद्यापदओमित्यादिना त्कार्यं सर्वमोंकार एव तद्गतद्वयांशापाये ओंकाराग्रविद्योत्तुर्यतुर्यमेवेत्यर्थः ॥ १ ॥ स एवाधस्तादित्यत्र तच्छब्दतस्तत्पदलक्ष्यमुच्यते स ब्रह्मेति श्रुतेः अहमेवाधस्तादित्यत्राहं शब्देन त्वं पदलक्ष्यमभिधीयते बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यत इति श्रुतेः सोऽहं शब्दाभ्यां प्रत्यगभिन्नं ब्रह्मोच्यते आत्मैवाधस्तादित्यत्र मत्यक्परविभागैक्यामहब्रह्ममात्रमात्मशब्देनोच्यते अधस्तादोर्ध्वांतरालप्रागाग्नेयादिदिक्षुच प्रसक्तभेदस्य मायिकत्वेन कारणतुल्यत्वात् सर्वं ब्रह्मैवेत्यर्थः ॥ २ ॥ ३ ॥

आत्मैवाधस्तादात्मोपरिष्टादात्मापश्चादात्मापुरस्तादात्मादक्षिणत आत्मोत्तरतआत्मैवेदं सर्वम् ॥४॥ आत्मैव वेदममृतमिदं ब्रह्मेदं सर्वम् ॥५॥ एतद्ब्रह्मैव सर्वम् ॥६॥ नारायण एवेदं सर्वम् ॥७॥ सच्चिदानन्दरूपमिदं सर्वम् ॥८॥ सत्तामात्रं हीदं सर्वम् ॥९॥ सत्स्वरूपमेवेदं सर्वम् ॥ १० ॥

स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् ॥ ११ ॥
स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः ॥१२॥
स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्नकिंचन ॥ १३ ॥
मरुभूमौ जलं सर्वं मरुभूमात्रमेव तत् ॥ १४ ॥
जगत्त्रयमिदं सर्वं चिन्मात्रं स्वविचारतः ॥ १५ ॥
भवर्जितचिन्मात्रं सर्वं चिन्मात्रमेव हि ॥ १६ ॥
यत्किंचिद्यन्नकिंचिच्च सर्वं चिन्मात्रमेव हि ॥ १७ ॥
अखंडैकरसं सर्वं यच्चिन्मात्रमेव हि ॥ १८ ॥
भूतं भव्यं भविष्यच्च सर्वं चिन्मात्रमेव हि ॥ १९ ॥
ज्ञाताचिन्मात्ररूपश्च सर्वं चिन्मात्रमेव हि ॥ २० ॥

(टीका) इदं पिण्डाण्डं सर्वमात्मैव पिण्डाण्डस्य मत्यविकल्पितत्वात् ॥१॥इदं ब्रह्माज्ञानविकल्पितब्रह्माण्डं सर्वं ब्रह्मैव पिंडांब्रह्माण्डगतहेयांशापाये इदमेतदुभयं परामृतं ब्रह्ममात्रमित्यर्थः नरादाविर्भूतं नारं जगत्तदारोपापन्नादाधारोनारायणः शिष्टं स्पष्टम् ॥ १० ॥ भूतादिकालत्रयपरिच्छेद्यं सर्वं स परमात्मैव ब्रह्मविष्णुरुद्राद्यधिष्ठितमिदं जगत्सर्वं स्वयमेव ॥ १० ॥ ॥ १४ ॥ यथा मरावारोपितजलं मरुभूमात्रं तथा चिन्मात्रविकल्पितं सर्वं जगद्विचारतश्चिन्मात्रमेवेत्यर्थः ॥ १४ ॥ ॥ १५ ॥ इदं किञ्चिदकिञ्चिदितियद्व्यवहृतं तत्सर्वं चिन्मात्रमेवेत्यर्थः ॥ २० ॥

यच्च यावच्च दूरस्थं सर्वं चिन्मात्रमेव हि ॥ २१ ॥
चिन्मात्रान्नास्ति लक्ष्यं च सर्वं चिन्मात्रमेव हि२२
आत्मनोऽन्या गतिर्नास्ति सर्वमात्ममयं जगत्॥२३॥
आत्मनोऽन्यत्तृणं नास्ति सर्वमात्ममयं जगत् ॥२४॥
सर्वमात्मैव शुद्धात्मा सर्वं चिन्मात्रमद्वयम् ॥२५॥
सर्वं च खल्विदं ब्रह्म नित्यचिद्घनमक्षतम् ॥ २६ ॥
समस्तं खल्विदं ब्रह्म सर्वमात्मेदमाततम् ॥ २७ ॥
नत्वं नाहं नचान्यं वा सर्वं ब्रह्मैव केवलम् ॥ २८ ॥
नतदस्ति न यत्राहं नतदस्ति नतन्मयम् ॥ २९ ॥
किमन्यदभिवांछामि सर्वं सच्चिन्मयं ततम्॥३०॥
भ्रांतिरभ्रांतिनास्त्येव सर्वं ब्रह्मैव केवलम् ॥ ३१ ॥
नदेहोनच कर्माणि सर्वं ब्रह्मैव केवलम् ॥ ३२ ॥
लक्ष्यालक्ष्यविज्ञानं सर्वं ब्रह्मैव केवलम् ॥ ३३ ॥
जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम् ॥३४॥
ब्रह्ममात्रमिदं सर्वं ब्रह्ममात्रमसन्नहि ॥ ३५ ॥
ब्रह्ममात्रं श्रुतं सर्वं ब्रह्ममात्रं रसं सुखम् ॥ ३६ ॥
ब्रह्ममात्रं श्रुतं सर्वं स्वयं ब्रह्मैव केवलम् ॥ ३७ ॥
ब्रह्मैव सर्वं चिन्मात्रं ब्रह्ममात्रं जगत्त्रयम् ॥३८॥
सर्वं प्रशांतमजमेकमनादिमध्यमाभास्वरं स्वदनमात्र मचैत्यचिन्हम् ॥ ३९ ॥

( टीका ) विकाराभावादक्षतं यत्र-संवेद्यजातं न तदस्तित्वन्मयमहमित्यादिविकल्पोऽपि नास्ति एतत्सर्वं चिन्मात्रमेवं स्थिते स्वातिरेकेण किमन्यदस्तीत्यभिवांछामीत्यर्थः ॥ २१ ॥ २२ ॥ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ भ्रांतिनास्त्येवेत्यत्र-विसर्गलोपश्छांदसः सद्ब्रह्ममात्रं निष्प्रतियोगिकं तदतिरिक्तमसत्त्वो

तत्सर्वमसदेवेत्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ स्वातिरेकेण यद्यत्किंचित्कल्पितं तत्प्रशांतं तत्कल्पकमनःप्रहाणात् स्वेन रूपेण समंताद्भासमानमभास्वरं स्वाद्यस्वादककलनाविरल्पात्स्वदनमात्रं ज्ञप्तिमात्रमित्यर्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥

सर्वं प्रशांतमितिशब्दमयीचदृष्टि-
र्यौधार्थमेवहि मुधैव तदोमितीदम् ॥ ४० ॥

सार्द्धांतिकः सर्वस्वरूपवाक्यानि चत्वारिंशत् अथ सार्द्धांतिक ब्रह्मस्वरूपवाक्यानि सर्वं ह्येतद्ब्रह्म ॥ १ ॥ अयमात्मा ब्रह्म ॥ २ ॥ सत्यं ज्ञानमनंतं ब्रह्म ॥ ३ ॥ प्रज्ञाप्रतिष्ठाप्रज्ञानं ब्रह्म ॥ ४ ॥ तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः ॥ ५ ॥ विज्ञानमानन्दं ब्रह्म ॥६॥ अजरोऽमरोऽमृतोऽभयोब्रह्मोभयंवै ब्रह्म ॥७॥ सर्वभूतस्थमेकं नारायणं कारणपुरुषमकारणं परं ब्रह्मोम् ॥ ८ ॥ स्वयंप्रकाशः स्वयं ब्रह्म ॥ ९ ॥

( टीका ) चित्तचैत्यापन्हवादचैत्यचिन्दं निर्विशेषब्रह्मप्रबोधार्थं यद्यत्किंचित्कल्पितं तदिदमोंकारार्थतुर्यतुर्यमितिसर्वं प्रशांतमित्यादिशब्दमयी च दृष्टिर्मुधैव व्यर्थमेव विकल्पिता निर्विशेषब्रह्मणोऽशब्दत्वात् यतोवाचोनिवर्तन्ते अप्राप्य मनसा सहेत्यादिश्रुतेः ॥४०॥ आहत्य वाक्यान्यशीत्यधिकसप्तशतं सर्वस्वरूपप्रकरणविवरणं संपूर्णम् ॥ ॥ १६५ ॥ अथ सार्द्धांतिकब्रह्मस्वरूपवाक्यानि लिख्यंते सर्वमित्यादिना कालत्रयाबाध्यं सत्यं ज्ञप्तिमात्रतया भातं ज्ञानं परिच्छेदत्रयाभावादनन्तं तदेतच्छब्दवाच्यत्वंपदलक्ष्यं प्रत्यगभिन्नं ब्रह्म स्वकारणाभावादपूर्वं स्वकार्याभावादनपरं स्वांतर्बाह्यकलनाभावादनंतरमबाह्यं सर्वत्रैव ब्रह्मविद्भिरयमात्मा ब्रह्मेत्यनुभूतत्वात्सर्वानुभूः ॥५॥

विज्ञप्तिमात्रमखंडानन्दं अशनायादिषड्रूर्म्यभावादजरः नित्यत्वादमरः कैवल्यरूपत्वादमृतः अद्वैतत्वादभयः सर्वभूतानामनेकत्वेऽपि तत्तत्प्रत्यक्त्वेन स्थितमेकं नारायणरूपेण कारणपुरुषात्मकं वस्तुतस्त्वकारणं परं ओंकारार्थं ब्रह्मेत्यर्थः साधनान्तरनैरपेक्ष्येण स्वयमेव प्रकाशत इति स्वयं प्रकाशः ॥ ९ ॥ १० ॥

तदेतद्द्वयं स्वयं प्रकाशमद्वानंदमात्मैवैतदभयममृतमेतद्ब्रह्म ॥ १० ॥

सदेव पुरस्तात्सिद्धं ब्रह्म ॥ ११ ॥ आकाशवत्सूक्ष्मं केवलसत्तामात्रस्वभावं परं ब्रह्म ॥ १२ ॥ अद्वितीयमखिलोपाधिविनिर्मुक्तं तत्सकलशक्त्युपबृंहितमनाद्यनन्तं नित्यं शिवं शांतं निर्गुणमित्यादिवाच्यमनिर्वाच्यं चैतन्यं ब्रह्म ॥ १३ ॥ एकमेवाद्वितीयं ब्रह्म ॥ १४ ॥ सर्वदानवच्छिन्नं परं ब्रह्म ॥ १५ ॥ सच्चिदानंदतेजः कूटस्थरूपं तारकं ब्रह्म ॥ १६ ॥ तन्नित्यमुक्तमविक्रियं सत्यज्ञानानंतानन्दपरिपूर्णं सनातनमेकमेवाद्वितीयं ब्रह्म ॥ १७ ॥ चित्स्वरूपं निरंजनं परं ब्रह्म ॥ १८ ॥ तत्वं पदलक्ष्यं प्रत्यगभिन्नं ब्रह्म ॥ १९ ॥ अखंडार्थपरं ब्रह्म ॥ २० ॥

( टीका ) स्वाविद्यापदतत्कार्यकल्पनायाः पुरस्तात्कालत्रयेऽपि सदेव विद्यत इति सिद्धं मायाकल्पिताखिलोपाधिसत्वे तद्विनिर्मुक्तं तत्तद्भूतभौतिकनिष्ठकाठिन्यजलाहरणादिशक्तिभिरुपबृंहितं तथाऽप्यनाद्यनंतं नित्यमित्यादिवाच्यमपि वस्तुतोऽनिर्वाच्यं चैतन्यं ब्रह्मेत्यर्थः ॥१३॥ सर्वदा व्यापकत्वादनवच्छिन्नम् ॥१४॥ ॥ १५ ॥ योगिभिर्भ्रूमध्ये यत्तारकमिति लक्ष्यते तदेव सच्चिदानंदतेजः कूटरूपं शुक्लतेजोमयं ब्रह्मेतिश्रुतेः कदापि स्वात्मबंधाभावाच्च

नित्यमुक्तं पुरातनत्वात्सनातनं तत्वं पदलक्ष्यैक्यसिद्धं प्रत्यगभिन्न-मुच्यते खंडमाया तत्कार्याऽनर्थापन्हवसिद्धमखंडार्थं ब्रह्मेत्यर्थः २०॥

सर्वकालाबाधितं ब्रह्म ॥ २१ ॥ सगुणनिर्गुणस्वरूपं ब्रह्म ॥ २२ ॥ आदिमध्यान्तशून्यं ब्रह्म ॥ २३ ॥ मायातीतगुणातीतं ब्रह्म ॥ २४ ॥ अनंतमप्रमेयखंडपरिपूर्णं ब्रह्म ॥ २५ ॥ अद्वितीयपरमानंदनित्यशुद्धबुद्धमुक्तसत्यस्वरूपव्यापकाभिन्नापरिच्छिन्नं ब्रह्म ॥ २६ ॥ सच्चिदानंदस्वप्रकाशं ब्रह्म ॥ २७ ॥ मनोवाचामगोचरं ब्रह्म ॥ २८ ॥ देशतः कालतोवस्तुतः परिच्छेदरहितं ब्रह्म ॥ २९ ॥ अखिलप्रमाणागोचरं ब्रह्म ॥ ३० ॥ तुरीयं निराकारमेकं ब्रह्म ॥ ३१ ॥ अद्वैतमनिर्वाच्यं ब्रह्म ॥ ३२ ॥ शिवं प्रशांतममृतं परं च ब्रह्म ॥ ३३ ॥ यदेकमक्षरं निष्क्रियं शिवं सन्मात्रं ब्रह्म ॥ ३४ ॥ असावादित्योब्रह्म ॥ ३५ ॥ ओमित्येतदक्षरं परं ब्रह्म ॥ ३६ ॥ ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ॥ ३७ ॥ अधश्चोर्ध्वं प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ३८ ॥ तदेवनिष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ॥ ३९ ॥ चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ ४० ॥

( टीका ) कालत्रयबंधनं जगत्कारणं ब्रह्मकालत्रयाबाधितं स्वाज्ञस्वज्ञदृष्टिभ्यां ब्रह्मणः सगुणंनिर्गुणत्वं चोपपद्यते माया तत्कार्यसत्वे तदतीतं सर्वव्यापकप्रत्यगात्मना अभिन्नमपरिच्छिन्नं ज्ञातभिरसनमुखतोवेदांतगोचरत्वात्प्रत्यक्षाद्यखिलप्रमाणागोचरं व्यापित्वात्कारणत्वात्सर्वात्मत्वाच्च देशकालवस्तुपरिच्छेदरहितं ॥ ३० ॥ अवस्थात्रयग्रासाविकल्पस्वरूपत्वात्तुरीयं निरुपाधिकत्वा-न्निराकारं स्वभास्यभासकादित्याद्यवभासकत्वादसौ चिदादित्योब्रह्म

त्यर्थः ॥३१॥३२॥३३॥३४॥३५॥३६॥ निर्विशेषं ब्रह्मैवेदममृतं तत् स्यादज्ञदृष्टिविकल्पितपुरस्तात्पश्चाद्दक्षिणतश्चोत्तरेणोत्तरतः अधश्चोर्ध्वं चशब्दादाग्नेयादिविदिशोपि गृह्यन्ते तदंतरालं च एवं दिगादिकलनाकलितं कृत्स्नं विश्वविराडीशादिभेदेन प्रसृतं व्याप्तं किंबहुना ब्रह्मैवेदं विश्वमिदं वरिष्ठं स्वातिरिक्तसत्ताभावात् ॥३८॥
यत्कलाविकल्पविरलं तदेव चैतन्यं निष्कलम् ॥ ४० ॥

ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ४१ ॥
एतद्भावविनिर्मुक्तं तद्ब्रह्म ब्रह्मतत्परम् ॥ ४२ ॥
चिन्मात्रात्परमं ब्रह्म चिन्मात्रान्नास्तिकोऽपिहि ४३
अखंडैकरसं ब्रह्म चिन्मात्रान्नहि विद्यते ॥ ४४ ॥
सदोदितं परं ब्रह्मज्योतिषामुदयोयतः ॥ ४५ ॥
यस्मिन्स लीयते शब्दस्तत्परं ब्रह्म गीयते ॥ ४६ ॥
सर्वशक्तिपरं ब्रह्म नित्यमापूर्णमद्वयम् ॥ ४७ ॥
सत्ता सर्वपदार्थानां गम्यं ब्रह्माभिधं पदम् ॥ ४८ ॥
परं ब्रह्म परं तत्वं सच्चिदानंदलक्षणम् ॥ ४९ ॥
अक्षरं परमं ब्रह्म निर्विशेषं निरञ्जनम् ॥ ५० ॥
ब्रह्मैवैकमनाद्यंतमब्धिवत्प्रविजृंभते ॥ ५१ ॥
नकिंचिद्भावनाकारं यत्तद्ब्रह्म परंविदुः ॥ ५२ ॥
एकमेवाद्वयं ब्रह्म नेह नानास्तिकिंचन ॥ ५३ ॥
ब्रह्मैव विद्यते साक्षाद्वस्तुनोवस्तुनोऽपि च ॥ ५४ ॥
तद्विद्याविषयं ब्रह्म सत्यज्ञानसुखाद्वयम् ॥ ५५ ॥
शान्तं च तदतीतं च परं ब्रह्म तदुच्यते ॥ ५६ ॥
अनुभूतिपरं तस्मात्सारं ब्रह्मेति कथ्यते ॥ ५७ ॥

( टीका ) यत्स्वयं प्रकाशतयोपबृंहितं तदेव ब्रह्मशब्देनेरितं तद्ब्रह्मैतत्स्वातिरिक्तभावविनिर्मुक्तं यतस्सूर्यादिज्योतिषामुदयोभ-

वति तत्सदोदितं यत्सर्वशब्दलयाधिकरणं तत्परं ब्रह्म यद्घटादि-सर्वपदार्थजलाहरणादिशक्तिजनकं तदेव सदापूर्णम् ॥ ४७ ॥ घटादिसर्वपदार्थानां यत्सत्ताप्रदं तत्पदं ब्रह्मेति गम्यते तदेव परं तत्त्वं निर्विशेषम् ॥ ५० ॥ यत्स्वातिरिक्तभावनाकारस्यापवादाधिष्ठानं निस्तरंगाब्धिवत्स्वमात्रत्वेन प्रविजृंभते स्वातिरेकेणेह ब्रह्मणि किंचन किंचिदपि नानारूपं नास्ति ब्रह्मणोनानारूपत्वात् ॥ ५४ ॥ स्वज्ञस्वाज्ञदृष्टिभ्यां स्वेन रूपेण विश्वाकारेणापि ब्रह्मैव विद्यते ब्रह्मातिरिक्तस्य मायामात्रत्वात् ॥ ५५ ॥ विश्वाविषयं ब्रह्म शांत-मायातत्कार्यं तच्छांतेरपि माया तत्कार्यसापेक्षतः सविशेषप्रसक्तौ तदतीतं तदपन्हवसिद्धमित्यर्थः ॥ ५६ ॥ तत्सर्वानुभूतितः परं तदेव सारं निर्विशेषम् ॥ ५७ ॥

यदिदं ब्रह्म पुच्छाख्यं सत्यज्ञानद्वयात्मकम् ॥५८॥
सद्रूपं परमं ब्रह्म त्रिपरिच्छेदवर्जितम् ॥ ५९ ॥
तद्ब्रह्मानन्दलक्षन्धं निर्गुणं सत्यचिद्घनम् ॥६०॥
सर्वाधिष्ठानमद्वन्द्वं परं ब्रह्म सनातनम् ॥ ६१ ॥
प्रज्ञानमेव तद्ब्रह्म सत्यप्रज्ञानलक्षणम् ॥ ६२ ॥
अस्तीत्युक्ते जगत्सर्वं सद्रूपब्रह्म तद्भवेत् ॥६३॥
भातीत्युक्ते जगत्सर्वं भानं ब्रह्मैव केवलम् ॥६४॥
ब्रह्ममात्रं चिदाकाशं सच्चिदानन्दमद्वयम् ॥६५॥
ब्रह्मणोऽन्यतरन्नास्ति ब्रह्मणोऽन्यज्जगन्नच ॥ ६६ ॥
ब्रह्मणोऽन्यदहं नास्मि ब्रह्मणोऽन्यत्फलं नहि ॥६७॥
ब्रह्मणोऽन्यत्तृणं नास्ति ब्रह्मणोऽन्यत्पदं नहि ॥६८॥
ब्रह्मणोऽन्यद्गुरुर्नास्ति ब्रह्मणोऽन्यदसद्वपुः ॥ ६९ ॥
नित्यानन्दमयं ब्रह्म केवलं सर्वदा स्वयम् ॥७०॥
बीजं मायाविनिर्मुक्तं परब्रह्मेति कीर्त्यते ॥७१॥

मद्रूपमद्वयं ब्रह्म आदिमध्यांतवर्जितम् ॥ ७२ ॥
सर्वत्रावस्थितं शान्तं चिद्ब्रह्मेत्यनुभूयते ॥ ७३ ॥

( टीका ) यत्पुच्छत्वेन सर्वाधारत्वेनोपबृंहितं तद्ब्रह्मापरिच्छिन्नम् ॥ ६० ॥ यत्सनातनं ब्रह्म तत्सत्यज्ञानानन्दलक्षणम् ॥ ६१ ॥ ६२ ॥ इदमिदं वस्त्वस्त्वीदं भातीदं प्रियमिति यदा बालगोपालमनुभूयते तद्धि सच्चिदानन्दं ब्रह्मेत्यर्थः ॥ ६४ ॥ सच्चिदाकाशं ब्रह्म तदतिरेकेणान्यतरदित्याद्यसद्वपुरित्यंन्तं नास्तीत्यर्थः ॥ ७० ॥ राम इति बीजमाकाराख्यमायाविनिर्मुक्तञ्चेत् परं ब्रह्म भवति राममंत्रार्थविचारप्रकरणात् यद्वा बीजं चैतन्यं बीजत्वापादकमायामाये निर्माय प्रत्यचैतन्यं भवेदित्यर्थः ॥७१॥ मद्रूपमस्मत्प्रत्ययालंबनप्रत्यक्चैतन्यं सर्वत्रावस्थितं सद्ब्रह्मेत्यनुभूयते ॥ ७३ ॥

सिद्धांतोऽध्यात्मशास्त्राणां सर्वापन्हव एव हि ॥७४॥
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥७५॥
स्वात्मन्यारोपिताशेषाभासवस्तुनिरासतः ॥ ७६ ॥
स्वयमेव परं ब्रह्म पूर्णमद्वयमक्रियम् ॥ ७७ ॥
राम एव परं ब्रह्म राम एव परं तपः ॥ ७८ ॥
राम एव परं तत्वं श्रीरामोब्रह्मतारकम् ॥ ७९ ॥
चिद्रूपमात्रं ब्रह्मैव सच्चिदानन्दमद्वयम् ॥ ८० ॥
ऋतं सत्यं परं ब्रह्म सर्वसंसारभेषजम् ॥ ८१ ॥
ब्रह्मचिद्ब्रह्मभुवनं ब्रह्मभूतपरंपरा ॥ ८२ ॥
ब्रह्माहं ब्रह्मचिच्छत्रुर्ब्रह्मचिन्मित्रबांधवाः ॥ ८३ ॥
ब्रह्मरूपतया ब्रह्म केवलं प्रतिभासते ॥ ८४ ॥
जगद्रूपतयाप्येतद्ब्रह्मैव प्रतिभासते ॥ ८५ ॥
विद्याविद्यादिभेदेन भावाभावादिभेदतः ॥ ८६ ॥

( टीका ) सत्यं ज्ञानमनन्तं ब्रह्म ब्रह्मव्यतिरिक्तं नकिंचिदस्तीत्यध्यात्मशास्त्रागमीशाचक्ष्णोत्तरशतोपनिषदां सिद्धांतस्तु स्वातिरिक्तसर्वापन्हव एव स्वातिरिक्तस्य शशविषाणवदवस्तुत्वम् पश्यतेहापि सन्मात्रमसदन्यत्. ब्रह्ममात्रमसन्नहि दृश्यरूपं च दृश्रूपं सर्वं शशविषाणवदितिश्रुतेः अतएव स्वातिरिक्तकारणीभूतमाया तत्कार्याविद्या कलनाशान्तं तत्कृतग्लान्यभावादक्लममिदं ब्रह्ममात्रमवशिष्यत इत्यर्थः ॥ ७५ ॥ स्वारोपितातन्निरासतः स्वयमेव ब्रह्म भवेत् ॥ ७६ ॥ निर्विशेषतया राजते महीयत इतिरामः स एव परमं ब्रह्म सर्वस्मात्परत्वात् स्वाप्त्युपायभूततपोराम एव उपेयभूतपरं तत्त्वमपि राम एव सत्तासामान्यरूपत्वात् श्रीराम एव तारकं ब्रह्म स्वाज्ञपटलसंतारणात् ॥ ७८ ॥ ऋत व्यावहारिकं सत्यं पारमार्थिकं चिद्रूपमात्रं ब्रह्मैव भजतां भवरोगभेषजं भवतीत्यर्थः ॥ ८० ॥ स्वज्ञस्वाज्ञदृशां चिद्ब्रह्मरूपतया भावनादिशिष्यान्तभेदेन ब्रह्मैव प्रतिभासते परमार्थदृष्ट्या स्वमात्रं प्रतिभासत इत्यर्थः ॥ ८१ ॥ ८६ ॥

गुरुशिष्यादिभेदेन ब्रह्मैव प्रतिभासते ॥ ८७ ॥
इदं ब्रह्म परं ब्रह्म सत्यं ब्रह्म प्रभुर्हिसः ॥ ८८ ॥
कालो ब्रह्म कला ब्रह्म सुखं ब्रह्म स्वयं प्रभम् ॥८९॥
एकं ब्रह्म द्वयं ब्रह्म मोहोब्रह्म शमादिकम् ॥ ९० ॥
दोषोब्रह्म गुणोब्रह्म दमः शान्तं विभुः प्रभुः ॥९१॥
लोकोब्रह्म गुरुर्ब्रह्म शिष्योब्रह्म सदाशिवः ॥ ९२ ॥
पूर्वं ब्रह्म परं ब्रह्म शुद्धं ब्रह्म शुभाशुभम् ॥ ९३ ॥
जीव एव सदा ब्रह्म स्वयं ब्रह्म सनातनमिति॥९४॥
सार्द्धीतिकब्रह्मस्वरूपवाक्यानि त्रिणवतिः अथ सार्द्धांतिकावशिष्टवाक्यानि सर्वविशेषब्रह्मेतिनेतीति

विहाय यदवशिष्यते तदद्वयं ब्रह्म ॥ १ ॥ जीवभावजगद्भावबाधे प्रत्यगभिन्नं ब्रह्मैवावशिष्यते ॥२॥ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ ३ ॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ४ ॥ कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ॥ ५ ॥ कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥ ६ ॥

(टीका) स्वाज्ञस्वज्ञदृष्टिभ्यां इदमित्यादिसनातनान्तरूपेण निर्विशेषं ब्रह्मैव भातीत्यर्थः ॥ ६३ ॥ आहत्यवाक्यसंख्यात्रिसप्तत्यधिकाष्टशत ब्रह्मस्वरूपप्रकरणविवरणं संपूर्णम् अथ सार्द्धान्तिकावशिष्टस्वरूपवाक्यानि लिख्यंते सर्वेत्यादिना स्वाज्ञविकल्पितसर्वविशेषं नेतिनेतीति विहाय तन्निषेधास्पदतया यदवशिष्यते तदेव ब्रह्म ॥ १ ॥ स्वस्मिन् स्वातिरिक्ते च समारोपितजीवभावजगद्भावयोर्ब्रह्मातिरिक्तं नास्तीति बाधितयोः सतोः निःसपत्नं प्रत्यगभिन्नं ब्रह्मैवावशिष्यते ॥ २ ॥ पूर्णमद इत्याद्यर्द्धांतिकद्वयं शांतिप्रकरणे व्याख्यातम् ॥ ३ ॥ ४ ॥ तूलांतःकरणाविद्योपाधिकोजीवः मूलाविद्योपाधिकस्त्वीश्वरः स्वाज्ञविकल्पितकार्यकारणोपाध्यपन्हवात् निष्प्रतियोगिकपूर्णबोधः परमात्मैवावशिष्यते ॥ ६ ॥

ततस्तिमितगम्भीरं नतेजोन तमस्ततम् ॥ ७ ॥
अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥ ८ ॥
संकल्पमनसी भिन्ने न कदा च न केनचित् ॥ ९ ॥
संकल्पजाते गलिते स्वरूपमवशिष्यते ॥ १० ॥
महाप्रलयसंपत्तौ ह्यसत्तासमुपागते ॥ ११ ॥
अशेषदृश्ये सर्गादौ शान्तमेवावशिष्यते ॥ १२ ॥
वेदोल्लासविलासेषु स्वात्मकर्तृनयानया ॥ १३ ॥
स्वसंकल्पे क्षयं याते समसैवावशिष्यते ॥ १४ ॥

( टीका ) यतोब्रह्मनिर्विशेषं ततस्तिमितगम्भीरम् भूमरूपत्वात् तत्किं तेजः नेत्याह नतेज इति भूतभौतिकत्वाभावात् तथाचेत्तमोरूपं वास्यादित्यत्राह न तम इति स्वाज्ञानतमसोऽभावात् किंतच्चतं व्याप्यसत्वे तद्व्यापकं तदाख्या किमिति अनाख्यं ब्रह्मेत्याख्याया अपि मायिकत्वात् तत्किंरूपेणाभिव्यक्तमिति चेत् अनेभिव्यक्तं निष्प्रतियोगिकस्वमात्रज्ञानं विनाऽनभिव्यक्तित्वात् उक्तविशेषणाविशिष्टं सत् किंचिन्निर्विशेषं स्वमात्रमवशिष्यत इत्यर्थः ॥ ८ ॥ वृत्तिवृत्तिमतोरभेदात् संकल्पमनसोः कदापि भेदोन विद्यते तत्र ब्रह्मातिरिक्तं नेति कामसंकल्पादिवृत्तिकदंबे गलिते नष्टे सत्यथ स्वस्वरूपमात्रमवशिष्यते ॥ १० ॥ स्वातिरेकेण विश्वमनीयविश्वस्य सर्गादौ सृष्टिस्थितिप्रलयकाले महाप्रलयसंपत्तावासंतिकप्रलयाभिधानचतुष्पदंस्यसमये च स्वातिरेकेण विश्वं जातं स्थितं नष्टमिति यद्दृश्यते तस्मिन्नशेषदृश्ये स्वातिरिक्तसामान्यं असत्तामपन्हवतां गते सत्यथ स्वातिरिक्तनाशांतं ब्रह्मैवावशिष्यते ॥१२॥ स्वयं निर्विशेषपरमात्माऽपि स्वाज्ञानविकल्पितस्वेऽपि सत्तालाभालाभाभ्यां संजातखेदोल्लासविलासेषु दुःखी सुखी कृष्यादिकर्मकर्त्ता तत्फलभोक्तेति चानया स्वात्मकर्तृतयाविकल्पितस्त्वसंकल्पे क्षयमपन्हवं याते सत्यथ स्वातिरिक्तविषमताग्रासस्समतासच्चिदानन्दानन्दरूपिण्येवावशिष्यते ॥ १४ ॥

समता सर्वभावेषु याऽसौ सत्यपरा स्थितिः ॥ १५ ॥
परमामृतनाम्नी सा समतैवावशिष्यते ॥ १६ ॥
कालत्रयमुपेक्षित्र्या हीनायाश्चैत्यबंधनैः ॥ १७ ॥
चितश्चैत्यमुपेक्षित्र्याः समतैवावशिष्यते ॥ १८ ॥
साहि वाचामगम्यत्वादसत्तामिव शाश्वतीम् ॥ १९ ॥
नैरात्म्यसिद्धांतदशामुपयातेव शिष्यते ॥ २० ॥

यावद्यावन्मुनिश्रेष्ठ! स्वयं सन्त्यज्यतेऽखिलम्॥२१॥
तावत्तावत्परालोकः परमात्मैव शिष्यते ॥ २२ ॥

( टीका ) स्वाज्ञदृष्टिविकल्पितसर्वभावेषु पंचभूतभौतिकेषु नामरूपादियोगतोविषमेष्वपि स्वज्ञदृष्ट्या याऽसौ सती सच्चिदानन्दरूपिणी नामरूपतः परास्थितिः समता विभाति सेयं परमामृतनाम्नी विदेहकैवल्यरूपिणी समतैवावशिष्यत इति ॥१५॥१६॥ स्वातिरेकेण भूतादिकालत्रयचेति कालत्रयमुपेक्षित्याश्चेतोविकल्पितचैत्यबंधनैर्निर्विषयाभिनिवेशैर्विहीनायाः किंतेन कार्यमिति चैत्यमुपेक्षित्याश्रितः प्रतीचः परब्रह्मैक्यतः निष्प्रतियोगिकसमतैवावशिष्यते ॥ १७ ॥ १८ ॥ या स्वातिरिक्तसर्वापन्हवसिद्धा सा हि चित्स्वाज्ञविकल्पितवाज्ञानसागम्यतया स्वातिरिक्तापन्हवरूपिण्यसत्ता निर्विशेषतया शाश्वती स्वाज्ञविकल्पिताऽत्मा जीवः अनात्मा देहादिः स्वमात्रतया तदपन्हवसिद्धत्वं नैरात्म्यं तदेव सिद्धान्तोयस्यां पारमार्थिकस्वावशेषदशायामाविर्भूतः सेयं नैरात्म्यसिद्धान्तदशा तामुपयाता सैव चित्स्वमात्रमवशिष्यते इवशब्दद्वयतः स्वाज्ञस्वज्ञदशायामपि निष्प्रतियोगिकस्वमात्रत्वमवगम्यत इत्यर्थः ॥ १९ ॥ २० ॥ हेमुनिश्रेष्ठ निदाघनिर्विशेषब्रह्मावरणबौद्धमीमांसकद्वैतादिमतसिद्धांतदेहत्रयात्मजीवात्मजगज्जीवेषु भेदेषु यावद्यावत्स्वयं संत्यज्यतेऽखिलं तावत्तावद्येन परमात्माहमित्यवलोक्यते सोऽयं परालोको ब्रह्मविद्वरः प्रत्यगभिन्नपरमात्मैव भूत्वावशिष्यते ॥ २१ ॥ २२ ॥

अभ्यासेन परिस्पंदे प्राणानां क्षयमागते ॥ २३ ॥
मनः प्रशममायाति निर्वाणमवशिष्यते ॥ २४ ॥
ज्ञेयवस्तु परित्यागे विलयं याति मानसम् ॥२५॥
मानसे विलयं याते कैवल्यमवशिष्यते ॥ २६ ॥

यतोवाचोनिवर्त्तन्ते विकल्पकलनान्विताः ॥ २७ ॥
विकल्पसंक्षयाज्जंतोः पदं तदवशिष्यते ॥ २८ ॥
शिवोमैव किलास्तीह परापरविवर्जितम् ॥ २९ ॥
सर्वत्रासंभवत्त्वं यत्कल्पांतेऽवशिष्यते ॥ ३० ॥
पंचरूपपरित्यागादर्थस्वरूपप्रहाणतः ॥ ३१ ॥
अधिष्ठानं परं तत्वमेकं सच्छिष्यते महत् ॥ ३२ ॥

( टीका ) वेदांतश्रवणसहकृतयमाद्यष्टांगयोगाभ्यासेन प्राणानां परिस्पंदे चलने क्षयमागते सत्यथ स्वालंबनप्राणापानादिवृत्यभावान्मनः प्रशमं नाशमायाति ततोनिर्वाणं कैवल्यमवशिष्यते ॥२३॥ २४ ॥ निर्विशेषब्रह्मचित्स्वातिरिक्तघटादिज्ञेयसामान्यं नेति यदा परित्यजति तदा लंबनं मानसं विलीयते मनसि विलयं याते सत्यथ कैवल्यमवशिष्यते ॥२५॥२६॥ यतोनिर्विशेषब्रह्मणः सकाशान्नानाविधघटपटादिविकल्पकलनान्विता वाचोनिवर्त्तंते जंतोश्चित्तविभातनानाविकल्पसंक्षयात् यन्निर्विशेषतयापद्यते ज्ञायत इतिपदं तद्ब्रह्मैवावशिष्यते ॥ २७ ॥ २८ ॥ इहाद्यापि पुरा कल्पांते च सर्वत्रसर्वावस्थास्वपि स्वातिरेकेणासंभवत्त्वं स्वातिरिक्तविषयसामान्यशून्यं इदं परमुत्कृष्टमपरमपकृष्टं तद्वर्जितं यद्वा शिवजीवौपरापरौ तद्वर्जितं यच्छिवोमैवास्ति किल तदेवावशिष्यते ॥२९॥ ॥ ३० ॥ निर्विशेषब्रह्मातिरिक्तं न किंचिदस्तीति ब्रह्मादिसदाशिवांतपंचब्रह्मरूपपरित्यागात् तदवांतरं पंचभूतभौतिकजातसर्वरूपं तत्प्रहाणातः पंचब्रह्म तत्कार्य प्रपंचाधिष्ठानं महदपरिच्छिन्नं परन्तत्वं स्वयमेकं सदवशिष्यते ॥ ३१ ॥ ३२ ॥

सर्ववेदान्तसिद्धान्तसारं वच्मि यथार्थतः ॥ ३३ ॥
स्वयं मृत्वा स्वयं भूत्वा स्वयमेवावशिष्यते ॥ ३४ ॥
अशब्दमस्पर्शमरूपमव्ययम् यथा रसन्नित्यमगंधवच्चयत्

अनाद्यनन्तं महतः परं ध्रुवं तदेव शिष्यत्यमलं निरामयम्
सार्द्धांतिकाष्टस्वरूपवाक्यानि द्वाविंशत्यधिकत्रिशतं
सार्द्धांतिकावशिष्टस्वरूपवाक्यानि षट्त्रिंशत् अथ
सार्द्धांतिकफलवाक्यानि सयो ह वै तत्परमं ब्रह्म वेद
ब्रह्मैव भवति ॥ १ ॥ ब्रह्मविदाप्नोति परम् ॥२॥ ब्रह्म
संस्थोऽमृतत्वमेति ॥३॥ तरति शोकमात्मवित् ॥ ४ ॥
य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति ॥ ५ ॥
स एष विमुक्तनाविदुष्कर्मोब्रह्मविद्विद्वान् ब्रह्मैवाभि-
प्रैति ॥ ६ ॥

( टीका ) हेशिष्य ईशाद्यष्टोत्तरशतसर्ववेदांतसिद्धांतसारं ब्रह्ममात्रमसन्नहि सत्किंचिदवशिष्यत इत्येवं रूपं यथार्थतोवच्मि तच्छृणु किंतदितिचेत्स्वयं भूत्वा देहादावहं भावं निःशेषतस्त्यक्त्वा स्वयं तदपवादाधिष्ठानं ब्रह्म भूत्वाऽधिष्ठेयसापेक्षाधिष्ठानतापाये निरधिष्ठानरूपेण विद्वान् यमेवावशिष्यत इति यत् स एव सर्ववेदांतसिद्धांत इत्यर्थः ॥ ३४ ॥ अशब्दमित्यादिपूर्ववद्व्याख्यातं यत् महत्तत्वं तत्कार्यादपि परं कूटस्थत्वात् ध्रुवं स्थूलप्रपंचाभावात् निरामयं प्रत्यग्रूपणामलं भवति स्वविकल्पितविशेषांशापाये निर्विशेषरूपेण स्वयमेवावशिष्यते ॥३६॥ आहत्य वाक्यसंख्यानवशतम ॥ ९०० ॥ अवशिष्टवाक्यप्रकरणविवरणम् ॥ स्वरूपज्ञानिनां स्वांतर्ज्ञानानुरूपफलप्रदर्शनार्थमथफलस्वरूपमहावाक्यानि लिख्यंते सय इत्यादिना योहवै तन्निर्विशेषपरमं ब्रह्म वेद स्वमात्रमिति जानाति वेदनसमकालं समुनिर्ब्रह्मैव भवति ॥ १ ॥ ब्रह्मवित्परं आप्नोति ॥ २ ॥ ब्रह्मसंस्थः परिव्राट् निर्विशेषब्रह्मज्ञानतोऽमृतत्वं मोक्षमेति ॥ ३ ॥ प्रत्यगात्मवित्कामादिवृत्तिमयशोकं तरति ॥ ४ ॥ य एवं सर्वं ब्रह्म तदंतः पातित्वादहमपि ब्रह्मेति वेदवे-

श्यति स्थूलदेहारंभकं प्रारब्धकर्म तत् ज्ञानविज्ञानाभ्यां नश्यति तस्य प्रवृत्तफलत्वेनानुभवनाश्यत्वात् यदि सम्यक्ज्ञानं जायते तदागाम्यादिकर्मत्रयभागत्रयं क्षीयते तत्त्वज्ञानं जातं चेत्तदर्धमात्रांशोऽपि निःशेषं क्षीयते एवंचिद्ग्रन्थिसंशयनतः निःशेषं कर्मत्रयमपि क्षीयते तदा विद्वान् ब्रह्ममात्रमवशिष्यत इत्यर्थः ॥१६॥१७॥यथा गंगाकावेर्यादिनद्यः स्यन्दमाना प्रवहन्त्यः सत्यः गंगाकावेरीत्यादिनामरूपे विहाय समुद्रेऽस्तमदर्शनं गच्छन्ति तथा विद्वान् गौरोऽहं देवदत्त इत्यादिनामरूपाद्विमुक्तः सन् दिव्यं स्वयं प्रकाशं परात्माक्षिगोऽपि परं पुरुषन्निर्विशेषचिद्धातुमुपैति ॥ १८ ॥ १६ ॥ तमात्मानं ज्ञात्वा मृत्युं स्वातिरिक्तभ्रममप्यत्येत्यतिक्रामति मुक्तये ज्ञानोत्तरं पन्था नविद्यत इत्यर्थः ॥ २० ॥

तद्ब्रह्माहमिति ज्ञात्वा ब्रह्मसंपद्यते ध्रुवम् ॥ २१ ॥
यत्र यत्र मृतो ज्ञानी परमाक्षरवित्सदा ॥ २२ ॥
परब्रह्मणि लीयेत न तस्योत्क्रांतिरिष्यते ॥ २३ ॥
यद्यत्स्वाभिमतं वस्तु तस्य जन्मोद्भवमश्नुते ॥ २४ ॥
असंकल्पनशस्त्रेण छिन्नं चित्तमिदं यदा ॥ २५ ॥
सर्वं सर्वगतं शान्तं ब्रह्म संपद्यते तदा ॥ २६ ॥
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ॥ २७ ॥
विसृज्य ध्यानयोगेन ब्रह्माप्नोति सनातनम् ॥२८॥
घटाकाशमिवात्मानं विलयं वेत्ति तत्वतः ॥२६॥
सगच्छति निरालम्बं ज्ञानालोकं सनातनम् ॥३०॥
तृणाग्रेष्वंबरेभानौ नरनागामरेषु च ॥ ३१ ॥
यस्तिष्ठति तदेवाहामिति मत्वा न शोचति ॥३२॥
सर्वसाक्षिणमात्मानं वर्णाश्रमविवर्जितम् ॥ ३३ ॥

( टीका ) परमाक्षरविद्ज्ञो यत्राविमुक्तकीकटादौ म्रियते सदा

ज्ञानी परब्रह्मणि लीयते ब्रह्मैव भवति न तस्योत्क्रांतिरिष्यते अत्रैव समलीयत इति श्रुतेः अन्नतस्त्वाभिमतं विषयजातं तद्ब्रह्मातिरिक्तं नेति त्यागसमकालं विद्वान् स्वातिरिक्तभ्रममोक्षमश्नुते यदा संकल्पसामान्यत्यागशस्त्रेण चित्तमिदं छिन्नं भवति तदा योगी सर्वरूपेण सर्वगतत्वेन वस्तुतस्तत्कलनाशान्तं ब्रह्म स्वावशेषधिया संपद्यते ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ निर्विशेषब्रह्मज्ञानी परदृष्ट्या स्वदेहकृतपुण्यपापं च स्वेषु स्वप्रशंसापूजादिकारिषु प्रियेषु हेलनताडनादिकारिष्वप्रियेषु च निःशेषं विसृज्य निर्विशेषं ब्रह्मस्वमात्रमित्यखंडनिर्विकल्पकध्यानयोगेन सनातनं ब्रह्म स्वावशेषधियाप्नोति ॥ २७ ॥ २८ ॥ यथोपाधिविनिर्मुक्तघटाकाशमहाकाशमात्रं योऽयं ब्रह्मविद्वरीयांस्तथा स्वातिरिक्तभ्रमविलयाधिकरणमात्मानं प्रत्यञ्चं तत्वतोब्रह्ममात्रतया वेत्ति चेत्तदा सोऽयं विद्वान् ज्ञानालोकं ज्ञानैकगम्यं समन्ततोनिरालम्बं निर्विशेषभावं गच्छति ॥ २९ ॥ ३० ॥ अम्बरादिपंचभूतभौतिकेष्वपि प्रत्यगभिन्नब्रह्मरूपेण यस्तिष्ठति विद्वान् तदेवाहमिति मत्वा शोचनीयाभिदाभावान्न शोचति ॥ ३१ ॥ ३२ ॥ योवर्णाश्रमातीतसर्वसाक्षिणमात्मानं ब्रह्मरूपतया पश्यति स स्वयं प्रत्यगभिन्नब्रह्मैव भवति ॥ ३३ ॥

ब्रह्मरूपतया पश्यन्ब्रह्मैव भवति स्वयम् ॥ ३४ ॥
तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ॥ ३५ ॥
विदित्वा स्वात्मनोरूपं न बिभेति कुतश्चन ॥ ३६ ॥
वासनां सम्परित्यज्य मयि चिन्मात्रविग्रहे ॥ ३७ ॥
यस्तिष्ठति गतस्नेहः सोऽहं सच्चित्सुखात्मकः ॥३८॥
दर्शनादर्शने हित्वा स्वयं केवलरूपतः ॥ ३९ ॥
य आस्ते कपिशार्दूल ब्रह्मनब्रह्मवित्स्वयम् ॥४०॥

तदेषोयमिदं सर्वं भवति सर्वात्मा भवतीत्यर्थः ॥ ५ ॥ स एष ब्रह्मविद्वान् तद्वेदनसमकालं पुण्यपापविरलोभूत्वा ब्रह्मैवाभिप्रैति६ य एवं निर्बीजं वेद निर्बीज एव स भवति ॥ ७ ॥

तद्ब्रह्मैवाहमस्मीति ब्रह्म प्रणवमनुस्मरन् भ्रमरकीटन्यायेन शरीरत्रयमुत्सृज्य सन्यासेनैव देहत्यागं करोति स कृत्यकृत्यो भवति ॥ ८ ॥ तमेवं ज्ञात्वा विद्वान् मृत्युमुखात्प्रमुच्यते ॥९॥ तदेवं विद्वांस इहैवामृता भवन्ति॥१०॥अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥११॥ यज्ज्ञात्वा मुच्यते जंतुरमृतत्वं च गच्छति ॥१२॥ यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ॥ १३ ॥ तदा विद्वान् पुण्यपापे विधूय निरञ्जनः पुरुषं साम्यमुपैति ॥ १४ ॥

(टीका) निर्बीजं निर्विशेषमित्यर्थः ॥ ७ ॥ यत्तुरीयोंकाराप्रविद्योतं तत्तुरीयं ब्रह्मैवाहमस्मीति ब्रह्म प्रणवानुसंधानं कुर्वन् यथा भ्रमरोत्पन्नकीटकः स्वकारणीभूतं भ्रमरं ध्यायमानो भ्रमरो भवति कीटत्वाभिमानं विहायेत्यर्थः तथाऽयं विद्वान् सामान्यः शरीरत्रयाभिमतिमुत्सृज्य स्वातिरिक्तसामान्यसन्यासेन निःशेषतोदेहाभिमानत्यागं यदि करोति तदा कृत्यकृत्यो मुक्तोभवतीत्यर्थः ॥ ८ ॥ य एवं निर्विशेषचिद्धातुत्वेनोक्तस्तं स्वमात्रमिति ज्ञात्वा विद्वान् स्वमात्रभावं ग्रसतीति मृत्युः संसारस्तन्मुखात्प्रमुच्यते मुक्तो भवति यदा निर्विशेषं ब्रह्म स्वमात्रमिति जानन्ति विद्वांसस्तदेवमिहैवामृता भवन्ति ॥ १० ॥ तमात्मानं निचाय्य ज्ञात्वा तत्समकालं संसारबन्धात्प्रमुच्यते जन्तुर्विद्वान् यज्ज्ञात्वा मुच्यते बंधनात् अमृतत्वं च गच्छति ॥ १२ ॥ यदा निर्विशेषं ब्रह्म स्वमात्रमिति पश्यतीति पश्यः विद्वान्स्वयं प्रकाशत्वेन रुक्मवर्णं कर्त्तव्यप्रसक्तौ

कर्त्तारम् ईशितव्यमारायहष्टत ईशं पूर्णत्वात् पुरुषन्निरुपाधिसोपाधिभ्यां ब्रह्मयोनिं वस्तुचिद्धातुं स्वमात्रमिति पश्यते पश्यति तदा विद्वान् पश्यः पुण्यपापे तदुपलक्षितस्वातिरिक्तकलनां विधूय तत्रापि निरञ्जनःसन्परमं निर्वैपम्यं साम्यं स्वमात्रमित्युपैति प्रतिपद्यत इत्यर्थः ॥ १४ ॥

एतद्योवेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सौम्य ॥ १५ ॥ भिद्यते हृदयग्रंथिः छिद्यन्ते सर्वसंशयाः ॥१६॥ क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ १७ ॥ यथा नद्यः स्यंदमानाः समुद्रेऽस्तंगच्छन्ति नामरूपे विहाय ॥ १८ ॥ तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥१९॥ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ २० ॥

( टीका ) योविद्वानेतद्ब्रह्म प्रत्यग्रूपेण सर्वप्राणिगुहायां निहितं वेद तद्वेदनसमकालं सोऽयं विद्वान् अविद्यमानाऽविद्याग्रंथिं स्वातिरिक्तमस्ति नास्तीति विभ्रमरूपमिह जीवन्नेवामृतः सन्विकिरति विनाशयतीत्यर्थः ॥१५॥ समष्ट्याधारः परः व्यष्ट्याधारः प्रत्यगवरः यः स्वाधेयसापेक्षाधारात्विरलोभवति तस्मिन्निराधारे निर्विशेषे ब्रह्मणि स्वावशेषतया दृष्टे सत्यथास्य ब्रह्मविद्वरीयसो हृदयग्रन्थिर्भिद्यते हृदित्यविद्यापदमयमिति तदास्पदं तयोराधेयाधारतया तादात्म्यसम्बन्धोहि हृदयग्रंथिः ब्रह्मज्ञानखड्गेन भिद्यते नाशमेति सर्वसंशयाः छिद्यंते लौकिकवैदिकपरापरविद्याविषयकज्ञानफलमस्ति नवेत्यादिरूपाः छिन्ना भवन्ति अस्यैव कर्माणि च क्षीयंते आगाम्यादिभेदतः कर्माणि त्रिविधानि वर्तमानदेहानुष्ठितशुभात्मकं कर्मागामिशास्त्रज्ञानात् स्थूलांशनिवृत्त्या तत्राश्लेषोजायते अनंतकोटिजन्मकारणं संचितकर्म तद्विज्ञानेनागामिसंचितार्थं विन-

श्यति स्थूलदेहारंभकं प्रारब्धकर्म तत् ज्ञानविज्ञानाभ्यां नश्यति तस्य प्रवृत्तफलत्वेनानुभवनाश्यत्वात् यदि सम्यक्ज्ञानं जायते तदागाम्यादिकर्मत्रयभागत्रयं क्षीयते तत्त्वज्ञानं जातं चेत्तदर्थमात्रांशोऽपि निःशेषं क्षीयते एवंविद्ग्रन्थिसंशयततः निःशेषं कर्मत्रयमपि क्षीयते तदा विद्वान् ब्रह्ममात्रमवशिष्यत इत्यर्थः ॥१६॥१७॥यथा गंगाकावेर्यादिनद्यः स्यन्दमाना प्रवहन्त्यः सत्यः गंगाकावेर्यादिनामरूपे विहाय समुद्रेऽस्तमदर्शनं गच्छन्ति तथा विद्वान् गौरोऽहं देवदत्त इत्यादिनामरूपाद्विमुक्तः सन् दिव्यं स्वयं प्रकाशं परात्साक्षिणोऽपि परं पुरुषंनिर्विशेषचिद्धातुमुपैति ॥ १८ ॥ १९ ॥ तमात्मानं ज्ञात्वा मृत्युं स्वातिरिक्तभ्रममप्यत्येत्यतिक्रामति मुक्तये ज्ञानोत्तरं पन्था नविद्यत इत्यर्थः ॥ २० ॥

तद्ब्रह्माहमिति ज्ञात्वा ब्रह्मसंपद्यते ध्रुवम् ॥ २१ ॥
यत्र यत्र मृतोज्ञानी परमाक्षरवित्सदा ॥ २२ ॥
परब्रह्मणि लीयेत न तस्योत्क्रांतिरिष्यते ॥ २३ ॥
यद्यत्स्वाभिमतं वस्तु तस्य जन्मोक्षमश्नुते ॥ २४॥
असंकल्पनशस्त्रेण छिन्नं चित्तमिदं यदा ॥ २५ ॥
सर्वं सर्वगतं शान्तं ब्रह्म संपद्यते तदा ॥ २६ ॥
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ॥ २७ ॥
विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥२८॥
घटाकाशमिवात्मानं विलयं वेत्ति तत्त्वतः ॥२९॥
सगच्छति निरालम्बं ज्ञानालोकं सनातनम् ॥३०॥
तृणाग्रेष्वंबरेभानौ नरनागामरेषु च ॥ ३१ ॥
यस्तिष्ठति तदेवाहमिति मत्वा न शोचति ॥३२॥
सर्वमात्मगतात्मानं वर्णाश्रमविवर्जितम् ॥ ३३ ॥
( टीका ) परमाक्षरविद्दोयत्राविमुक्तकीकटादौ म्रियते सदा

ज्ञानी परब्रह्मणि लीयते ब्रह्मैव भवति न तस्योत्क्रांतिरिष्यते अत्रैव समलीयत इति श्रुतेः यद्यत्स्वाभिमतं विषयजातं तद्ब्रह्मातिरिक्तं नेति त्यागसमकालं विद्वान् स्वातिरिक्तभ्रममोक्षमश्नुते यदा संकल्पसामान्यत्यागशस्त्रेण चित्तमिदं छिन्नं भवति तदा योगी सर्वरूपेण सर्वगतत्वेन वस्तुतस्तत्कलनाशान्तं ब्रह्म स्वावशेषधिया संपद्यते ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ निर्विशेषब्रह्मज्ञानी परदृष्ट्या स्वदेहकृतपुण्यपापं च स्वेषु स्वप्रशंसापूजादिकारिषु प्रियेषु हेलनताडनादिकारिष्वप्रियेषु च निःशेषं विसृज्य निर्विशेषं ब्रह्मस्वमात्रमित्यखंडनिर्विकल्पकध्यानयोगेन सनातनं ब्रह्म स्वावशेषधियाप्येति ॥ २७ ॥ २८ ॥ यथोपाधिविनिर्मुक्तघटाकाशमहाकाशमात्रं योऽयं ब्रह्मविद्वरीयांस्तथा स्वातिरिक्तभ्रमविलयाधिकरणमात्मानं प्रत्यञ्चं तत्त्वतो ब्रह्ममात्रतया वेत्ति चेत्तदा सोऽयं विद्वान् ज्ञानालोकं ज्ञानैकगम्यं समन्ततो निरालम्बं निर्विशेषभावं गच्छति ॥ २९ ॥ ३० ॥ अम्बरादिपंचभूतभौतिकेष्वपि प्रत्यगभिन्नब्रह्मरूपेण यस्तिष्ठति विद्वान् तदेवाहमिति मत्वा शोचनीयाभिदाभावाद्य शोचति ॥ ३१ ॥ ३२ ॥ योवर्णाश्रमातीतसर्वसाक्षिणमात्मानं ब्रह्मरूपतया पश्यति स स्वयं प्रत्यगभिन्नब्रह्मैव भवति ॥ ३३ ॥

ब्रह्मरूपतया पश्यन्ब्रह्मैव भवति स्वयम् ॥ ३४ ॥
तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ॥ ३५ ॥
विदित्वा स्वात्मनो रूपं न बिभेति कुतश्चन ॥ ३६ ॥
वासनां सम्परित्यज्य मयि चिन्मात्रविग्रहे ॥ ३७ ॥
यस्तिष्ठति गतस्नेहः सोऽहं सच्चित्सुखात्मकः ॥ ३८ ॥
दर्शनादर्शने हित्वा स्वयं केवलरूपतः ॥ ३९ ॥
य आस्ते कपिशार्दूल ब्रह्मसब्रह्मवित्स्वयम् ॥ ४० ॥

सार्द्धांतिकफलवाक्यानि च ॥ ४० ॥

अथ सार्द्धांतिकविदेहमुक्तिवाक्यानिविमुक्तश्च विमुच्यते ॥ १ ॥ गुहाग्रंथिभ्योविमुक्तोमृतो भवति ॥ २ ॥

( टीका ) यस्त्वात्मनः प्रतीचोरूपं ब्रह्मेति विदित्वा कुतश्चन न बिभेति स्वस्यैव परमाद्वयत्वेन निर्भयब्रह्मत्वात् ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ यः चिन्मात्रविग्रहे मयि यत्र कुत्रापि विगतस्नेहः सन् स्वातिरिक्तवस्तुगोचरनानावासनाजालं परित्यज्य स्वातिरिक्तं नेत्यपन्हवं कृत्वा स्वावशेषतया तिष्ठति सोऽहं सच्चिदानंदरूपोभवामीत्यर्थः ॥ ३८ ॥ यस्तु ब्रह्मविद्वरीयान् दर्शनादर्शने व्यक्ताव्यक्तमपञ्चे स्वातिरिक्तधिया हित्वाऽपन्हवं कृत्वा स्वयं तदपन्हवसिद्धकेवलं ब्रह्ममात्ररूपतयास्ते ॥ ३९ ॥ हेमारुते स स्वयं ब्रह्मैव न ब्रह्मवित् वेदनसमकालमेव विदुषोब्रह्मभावं गतत्वादित्यर्थः ॥४०॥ आइत्य वाक्यसंख्याचत्वारिंशदधिकशतम् ॥ १०४ ॥ फलवाक्यविवरणं संपूर्णम् ॥२०॥ विध्याधिफलवाक्यान्तमहावाक्यार्थसंस्कृतानां निष्प्रतियोगिकमात्रावस्थानलक्षणविदेहमुक्तिसिद्ध्यै अथ सार्द्धांतिकविदेहमुक्तिवाक्यानि लिख्यन्ते विमुक्तश्चेत्यादिना पुरैव ब्रह्मात्मना मुक्त एव स्वाज्ञानतोब्रह्म इव भातः पुनः स्वाज्ञानतोविमुक्त इत्युपचर्यते ॥ १ ॥ हृदयगुहाश्रयाविद्या ग्रन्थिभ्यः पुरैव विमुक्तः सन्नधुनापि अमृतोभवतीव भवति ॥ २ ॥

अथाकामयमानोयोकामोनिष्काम आत्मकाम आप्तकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति ॥३॥ तद्यथाहिनिर्ल्वयिनी वल्मीके मृता प्रत्यस्ताशयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणोब्रह्मैव तेज एव ॥ ४ ॥ अशरीरोनिरिंद्रियोप्राणोतमाः सच्चिदानन्दमात्रः सस्वराड् भवति॥५॥

( टीका ) अथ स्वातिरिक्तप्रपञ्चविरक्त्यनन्तरं कामनीयविषयाभावादकामयमानः योऽयमकामः कामा यस्मान्निर्गताः सोऽयं निष्कामः आत्मैव कामो यस्य सोऽयमात्मकामः स्वात्मन्यासितः आत्मकामः एवं निर्विशेषं ब्रह्म स्वमात्रमिति यो जानाति तस्य ब्रह्मविद्वरीयसः प्राणोपलक्षितपिण्डाण्डब्रह्माण्डाभासाः सन्तीति यद्भ्रान्तिसद्दृष्ट्या प्राणादयः स्वाधिकरणे विलयं भजन्तु वस्तुतो ब्रह्ममात्रभावापत्तेः स्वातिरिक्तप्राणाद्यपह्नवपूर्वकत्वात् अत एवायं स्वाज्ञादिदृष्ट्या स्वातिरिक्तमोहे सत्यमपि ब्रह्मैव सन्ब्रह्माप्येतीत्युपचर्यते ॥ ३ ॥ तत्र यथा लोके अहिर्यस्यां लीयत इत्यहिनिर्लयिनी सर्पत्वक् स्वाश्रयवल्मीकादौ मृता प्रत्यस्ता परित्यक्ता शयीत वर्तेत एवमेव स्वेन त्यक्तमिदं सर्पनिर्मोकस्थानीयं शरीरत्रयं मृतमिव शेते चेतनवच्चलतु वा अथेतरस्थानीयो विद्वान् सर्पवत्तत्र विद्यमानोऽपि अशरीरं एव नहि पूर्ववत्तदात्मानं जीव मन्यते देहजीवात्मदृष्टेः परित्यक्तत्वात् यतोऽयमशरीरः अतएवायममृतः तथापि प्राणितीति प्राणः प्राणादिप्रवृत्तिनिमित्तत्वात् यथा प्राणस्य प्राणमित्यादिश्रुतितः प्राणशब्देन परमात्मोच्यते यः परमात्मा तद्ब्रह्मैव किम्पुनस्तत्तेज एव चिन्मात्रत्वात् ॥ ४ ॥ विद्वानशरीरेन्द्रियप्राणतमोरूपस्वाज्ञानापह्नवसिद्धसच्चिदानन्दमात्रत्वेन स्वे महिम्नि राजत इति स्वराड् भवति ॥ ५ ॥

पृथिव्यप्सु प्रलीयते आपोज्योतिषि लीयन्ते ज्योतिर्वायौ विलीयते वायुराकाशे आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ विलीयन्ते भूतादिर्महति विलीयते महानव्यक्ते विलीयतेऽव्यक्तमक्षरे विलीयतेऽक्षरं तमसि विलीयते तमः परे देव एकीभवति परस्तान्नासन्नसदसत् ॥६॥ अथायदं तद्ब्रह्म-

लोकान् कार्यरूपांश्च कारणत्वं प्रापयित्वा ततः सूक्ष्माङ्गं कर्मेन्द्रियाणि प्राणाश्च ज्ञानेन्द्रियाण्यथन्तःकरणचतुष्टयं चैकीकृत्य सर्वाणि भौतिकानि कारणे भूतपञ्चके संयोज्य भूमिं जले जलं वन्हौ वायौ वायुमाकाशेचाकाशमहंकारेचाहंकारं महति महदव्यक्ते अव्यक्तं पुरुषे क्रमेण विलीयते विराड् हिरण्यगर्भेश्वरा उपाधिविलयात्परमात्मनि लीयन्ते ॥ ७ ॥

( टीका ) स्वातिरेकेण सृष्टिसत्वे तद्वैपरीत्येन पृथिव्यादि स्वस्वकारणे विलीयते आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु अपञ्चीकृतपञ्चमहाभूतानि भूतादौ विक्षेपबीजे तत्तु महत्यावरणे तत्त्वव्यक्ते तत्त्वक्षरे अक्षरं तमसि सर्वाधिकरणे साक्षिणि साक्षी तु परे देवे निर्विशेषब्रह्मणि एकीभवति तत्परस्तात् सत्वेनासत्वेनासदसत्वेन वा स्वातिरिक्तं नास्तीत्यर्थः ॥६॥ पञ्चीकृतभूतकार्यब्रह्माण्डादिकर्म पंचीकृतभूतपंचके प्रविलाप्यापञ्चीकृतभूम्यादि तत्कारणे प्रविलाप्य तत्पञ्चभूभूतं विक्षेपात्मकाहंकारे तमहंकारमावरणात्मके महति तत्त्वव्यक्ते साधिष्ठानमव्यक्तं निर्विशेषपुरुषक्रमेण विलीयते तत्समष्ट्यारोपाधाराविराडादयः स्वस्वोपाधिलयात् परमात्मनि लीयन्ते ॥ ७ ॥

प्रारब्धक्षयवशादेहत्रयभङ्गं प्राप्योपाधिनिर्मुक्तघटाकाशवत्परिपूर्णताविदेहमुक्तिः ॥ ८ ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥९॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥१०॥ वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्वाः ॥११॥ ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ १२ ॥

( टीका ) विदुषः परारोपितप्रारब्धाभासक्षयानंतर उपाधिविनिर्मुक्तघटाकाशोयथा परिपूर्णाकाशपदं भजति तथा प्रातिभासिकदेहत्रयाभिमानभङ्गं प्राप्य परिपूर्णरूपा या स्थितिः सैव विदेहमुक्तिरित्यर्थः ॥ ८ ॥ यदा ब्रह्मातिरिक्तं न किंचिदस्तीति विदुषोऽस्य हृदयाश्रिता निर्विशेषब्रह्मावरणरूपा ये सर्वे कामाः प्रमुच्यन्तेऽपन्हवं यांति अथ सर्वकामापन्हवानन्तरं पुरा देहित्वेन मर्त्योऽपि स्वाचमर्त्यभावं विहायामृतोऽमरणधर्मो भवति अत्रास्मिन् शरीरे स्थितोऽपि ब्रह्म समश्नुते विदेहमुक्तोभवतीत्यर्थः ॥ ९ ॥ ११ ॥ ईशादिसर्ववेदान्तविज्ञानं यैः सुनिश्चितं ते वेदान्तविज्ञानसुनिश्चितार्थाः निर्विशेषब्रह्मनिष्ठानुकूलसर्वकर्मसन्यासप्रयोगात्त्वमात्रावस्थित्यै यतन्त इति समयः संन्यासयोगादेव शुद्धसत्वप्रधानाः सन्तः ते ब्रह्मैव लोकोब्रह्मलोकः उपासकानां बाहुल्याद्ब्रह्मलोकेष्विति बहुवचनं ब्रह्मणीत्यर्थः स्वातिरेकेण यत्परमन्यदिव भाति तस्यांतमवसानं यत्सम्यक्ज्ञानं कलयतीति तत्परांतकालः तस्मिन् परांतकाले सम्यक्ज्ञाने सति तत्समकालं परममृतं अमरणधर्मकं ब्रह्मैव एषां ते परा मृता जीवन्त एव ब्रह्मभावमापन्नाः सन्तः विभिन्नघटाकाशपवन्निस्नेहदीपवच्च सर्व ब्रह्मचिन्नरिष्ठाः परिमुच्यन्ते ब्रह्ममात्रपर्यवसन्ना विदेहमुक्ता भवन्तीत्यर्थः ॥ ११ ॥ १२ ॥

तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः ॥ १३ ॥ जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ॥ १४ ॥ विशत्यदेहमुक्तत्वं पवनोऽस्पंदतामिव ॥ १५ ॥ ततः सत्संभूवाऽसौ यद्गिरामप्यगोचरम् ॥ १६ ॥ यच्छून्यवादिनां शून्यं ब्रह्मब्रह्मविदां च यत् ॥ १७ ॥ विज्ञानमात्रं विज्ञानविदां यदमलात्मकम् ॥ १८ ॥

( टीका ) योनिर्विशेषचिद्धातुस्तस्य ब्रह्मैवेदं सर्वमित्यभिध्यानात् तच्छ्रष्टिरूपमध्यारोपदचैतन्यभिदामसक्तौ शोधितत्वंपदार्थतत्पदार्थयोर्योजनादैक्यात् तत्रापि सापेक्षश्रुतियुक्तिभ्यां सविशेषस्फूर्तौ सविशेषगन्धासहसत्तासामान्यतत्वाभावाच्चत्वज्ञानहेतुसम्यक्ज्ञानात् माया तत्कार्यविश्वसत्तानिवृत्तितोजीवन्मुक्तिमेत्य भूयश्च भूयोऽपि जीवन्मुक्तिदशान्ते तत्वज्ञानप्रादुर्भावसमकालं कार्यकारणरूपविश्वमायाया आत्यन्तिकी निवृत्तिर्भवेदित्यर्थः ॥१३॥ यावदहं ब्रह्मास्मीति ब्रह्माकारावृत्तिलहरी प्रवहति तावज्जीवन्मुक्तिः तद्वान् जीवन्मुक्तः प्रारब्धाभासनाशावधिभूमा उपित्वाऽथ यथा पवनो व्योम्नः स्पन्दतामेत्य व्योमैव भवति पवनव्योम्नोन ॥१४॥ रूपस्वात्तथामुनिः स्वाधिष्ठित देहाभासे कालसात्कृते आत्यान्तिकदेहाभिमानाभावात्स्वरूपत्वा स्थितेऽपि वा विदेहमुक्तिं विशति विदेहमुक्तोभवतीत्यर्थः ॥१५॥ असौ जीवन्मुक्तोमुनिः तत आत्यन्तिकाभिमतिनिवृत्यनन्तरं यन्मनोगिरामप्यगोचरं ब्रह्ममात्रपदं तत्पदमेव संप्रभूय विदेहमुक्तिपदवीं गतवानित्यर्थः विदेहमुक्तस्य निर्विशेषब्रह्ममात्रतयाऽवस्थितत्वात् तमेव शून्यादिकालांतवादिन्यः स्वस्वभ्रांतिविकल्पितात्मानं मेनिर इत्याह यदित्यादिना यन्निर्विशेषब्रह्मविदां सर्वविशेषकलनापन्हवसिद्धं ब्रह्मेत्यभिमतं तदेव शून्यवादिनां स्वदृष्टिदोषाच्छून्यसाक्षिणी सत्यपि शून्यमात्मेत्यभिमतं तन्मते तु स्वापे विश्वादर्शनात्तत्र यच्छिष्यते सर्ववस्तुशून्यवदेवात्मेति यच्छून्यवादिनिश्चितं तदेव विज्ञानविदाममलात्मकं विज्ञानमात्मेत्यभिमतं भवति तन्मते तु यथादिदंत्वेनाहंत्वेन जानामि तत्तद्बाह्यविज्ञानमालयविज्ञानं चेति तत्क्षणिकमपि विज्ञानसंततिरेवात्मेति ॥ १८ ॥

पुरुषः सांख्यदृष्टीनामीश्वरोयोगवादिनाम् ॥ १९ ॥

शिवः शैवागमस्थानां कालः कालिकवादिनाम् ॥ २० ॥
यत्सर्वशास्त्रसिद्धान्तं यत्सर्वहृदयानुगम् ॥ २१ ॥
यत्सर्वं सर्वगं वस्तु यत्तत्त्वं तदसौ स्थितः ॥ २२ ॥
यदनुत्तमनिष्पन्दं दीपकं तेजसामपि ॥ २३ ॥
स्वानुभूत्यैकमानं च यत्तत्त्वं तदसौ स्थितः ॥ २४ ॥
यदेकं चाप्यनेकं च साञ्जनं च निरञ्जनम् ॥ २५ ॥
यत्सर्वं चाप्यसर्वं च यत्तत्त्वं तदसौ स्थितः ॥ २६ ॥

( टीका ) यद्योगाचारानुगृहीतं तदेव सांख्यदृष्टीनां पुरुष आत्मेत्यभिमतं तन्मते तु प्रधानं कर्तृपुरुषो निर्लिप्तः निर्लेपावस्थितिर्मुक्तिः यः सांख्यगृहीतः पुरुषः स एव योगवादिनामीश्वर आत्मेत्यभिमतः तन्मते तु विशिष्टाद्वैतं सिद्धान्तः तत्साधनं यमाद्यष्टांगयोगः सुषुम्नाद्वारा स्वाभिमतेश्वरलोकं प्रविश्य तत्सारूप्यादिर्मुक्तिः स एव शैवागमस्थानां शिव आत्मेत्याभिमतः तन्मते तु समयविशेषनिर्वाणादि दीक्षापूर्वकं तदुपासनाशैवविशिष्टाद्वैतज्ञानतज्ञानतस्वदेहांते शिवदेहसायुज्यं मुक्तिः यः शैवगृहीतः स एव कालिकवादिनां काल आत्मेत्यभिमतः तन्मते तु चित्संवलितगुणसाम्यप्रकृतिकालः निमेषादिकालो विकृतिः विशिष्टाद्वैतं तत्सिद्धांतः बन्धमोक्षौ कालायत्तौ सर्वं कालायत्तमिति ज्ञानतः प्रकृत्यन्वितचित्पदं मुक्तिरिति शून्यादिकालात्मवादांतवैषम्यं तु निर्विशेषब्रह्मज्ञानविजृम्भितं तन्मतगतवैषम्यमात्रापन्हवतो यद्ब्रह्मविदां ब्रह्मेत्यभिमतं देवसाम्यं विदेहरूपमुक्तिरित्यर्थः ॥ २० ॥ यच्चार्वाकादिसर्वशास्त्रप्रमेयगतवैषम्यांशापन्हवसिद्धसिद्धांतरूपं यत्प्रत्यग्रूपेण सर्वहृदयानुगं स्वातिरिक्तसर्वसत्वे यत्सर्वं यद्वस्तु सर्वगतं यद्व्याप्यव्यापकादिकलनापन्हवतः परमार्थत्वमवशिष्टं तदेवाऽसौ विदेहमुक्तिरूपेण स्थितः ॥ २२ ॥ उदयास्तमयादिकलनाविरलचित्सूर्यत्वाद्यदनुत्तमनिष्पन्दं

यत्तत दग्धगतसूर्यादितेजसामप्युद्दीपकं यदु ब्रह्ममागमसन्नद्धीति श्रुतिसिद्धस्यानुभूत्यैकमानं चशब्दतस्तदतीतत्वमपि द्योत्यते यत्तत्वं तदसौ स्थित इत्युक्तार्थः ॥ २५ ॥ यत्स्वाज्ञस्वज्ञदृष्टिभ्यां यदनेकत्वेनैकत्वेन सांजनत्वेन निरंजनत्वेन सर्वं सत्वेनासत्वेन च भातं यत्तत्वं तदसा स्थितः ॥ २६ ॥

निरानन्दोऽपि सानन्दः सच्चासच्च बभूव सः ॥ २७ ॥
नचेतनोनच जडोनचैवासन्नसन्मयः ॥ २८ ॥
अजममरमनाद्यमाद्यमेकं पदममलं सकलं च निष्कलञ्च
स्थित इति स तदानभं स्वरूपादपि विमल-
स्थितिरीश्वरं तयोन ॥ ३० ॥ व्यपगतकलनाकलङ्कशुद्धः स्वयममलात्मनि पावने पदेऽसौ ॥ ३१ ॥ सलिलकण इवांबुधौ महात्मा विगलितवासनमेकतां जगाम ॥ ३२ ॥ संशान्तदुःखमजडात्मकमेकसुप्तमानन्दमन्थरमपेतरजस्तमोयत् ॥ ३३ ॥

( टीका ) योविदेहमुक्त इति ख्यातः स एव स्वाज्ञस्वज्ञदृष्टिभ्यां निरानन्दसानन्दः सदसच्च बभूव परामर्थदृष्ट्या यं न चेतनः चेतोवृत्तीनामसत्वेन तच्चेतयितृत्वासंभवात् नच जडः जडात्रियापादापन्हवसिद्धत्वात् नचैवासदमूर्तमानसाग्राह्यत्वात् न सन्मयोमूर्तस्वरूपश्चक्षुराद्यग्राह्यत्वात् किन्त्वनृतजडदुःखापन्हवसिद्धसच्चिदानन्दमात्रतया विदेहमुक्तोऽवशिष्यत इत्यर्थः ॥ २८ ॥ अजं जन्माद्यभावात्, अमरं नाशाभावात्, अनाद्यं स्वस्य कारणाभावात्, आद्यं सर्वकारणत्वात्, एकं परमाद्वयत्वात्, पदं मुक्तालिगम्यत्वात्, अमलं मायिकमलाभावात्, सकलं स्वपदप्राप्त्युपायजनकत्वात्, निष्कलं वस्त्वभावात् चशब्दोनिष्प्रतियोगिकत्वद्योतकः एवं रूपेण यः स्थितः सोऽयं विदेहमुक्तस्तदा निर्विशेषज्ञानोचरक्षणेन

मलवत्सर्वसंकल्पापन्हवान्नभः स्वरूपादपि निर्मलः सन् स्वाव-शेषतयाऽवस्थातुमीश्वरोभवतीत्यर्थः ॥ ३० ॥ अशुद्धमाया तत्कार्य-कलङ्काभावाच्छुद्धः निर्मलात्मा विदेहमुक्तोऽसौ पावने पदे निर्मला-त्मनि विगलितनानाविधवासनं यथा भवति तथा महाम्बुधौ सलि-लकया इव महात्मा श्रीशुक एकतां जगाम निर्विशेषब्रह्ममात्रपदवीं गतवानित्यर्थः। संशान्तदुःखं भूमानन्दत्वात् अजडात्मकं जडमाया तत्कार्याभावात्, एकसुप्तं सुषुप्तस्यातिरिक्तत्वात्, यदपेतरजस्तमः निर्गुणत्वात्, आनन्दमन्थरं स्वानन्दनिर्भरत्वात्, आनन्दघन-मित्यर्थः ॥ ३२ ॥ ३३ ॥

आकाशकोशतनवोऽतनवोमहान्तस्तस्मिन्पदे ग-लितचित्तलवा भवन्ति। ३४ ॥ विदेहमुक्त एवाऽसौ विद्यते निष्कलात्मकः ॥३५॥ समग्राग्र्यगुणाधारमपि सत्वं प्रलीयते ॥ ३६ ॥ विदेहमुक्तोविमले पदे परम-पावने ॥ ३७ ॥ विदेहमुक्तिविषये तस्मिन् सत्वक्षया-त्मके ॥ ३८ ॥ चित्तनाशे विरूपाख्ये नकिञ्चिदिह विद्यते ॥ ३९ ॥ नगुणा नागुणास्तत्र नश्रीर्नाश्रीर्नचै-कता ॥ ४० ॥ जीवन्नेव सदामुक्तः कृतार्थोब्रह्मवित्तमः ॥ ४१ ॥ उपाधिनाशाद्ब्रह्मैव सन्ब्रह्माप्येति निर्द्वयम् ॥ ४२ ॥

( टीका ) तत्सच्चिदानन्दाकाशं ब्रह्मेति ये मन्यन्ते ते पुरा आकाशकोशतनवोजीवन्मुक्ता अपि यत्सर्वापन्हवतः स्वमात्रम-वशिष्यते तस्मिन् पदे विगलितचित्तोपलक्षितस्वाविद्यापदतत्कार्य-लवा भवन्ति ते स्वल्पतनवो महान्तो विदेहमुक्ता भवन्ति ॥ ३४ ॥ जीवन्मुक्तत्वाश्रमानित्वादिगुणगणसमग्राग्र्यगुणाधारं सत्वं चित्

१ चित्तेनोपलक्षितं स्वाविद्यातत्कार्यं तस्य लवः विगलितो येषामिति ।

सामान्याभिधानगुणसाम्यमपि यदा विलीयते अपन्हवं भजति तदेवासौ निष्प्रतियोगिकनिष्कलात्मकोभूत्वा विदेहमुक्तो विद्यते निर्विशेषब्रह्मात्मनाऽवशिष्यत इत्यर्थः ॥ ३६ ॥ देहत्रयापन्हवसिद्धे परमपावने विमले पदे विरूपचित्तनाशाभिधाने सत्त्वरूपगुणसाम्यापन्हवसिद्धे तस्मिन्विदेहमुक्तिविषये विदेहमुक्तिस्वरूपे तत्रसत्त्वादिगुणा न सन्ति नाप्यगुणागुणसाम्यवृत्तयोनिर्विकल्पकरूपा भवन्ति नापि मुमुक्ष्वाश्रयणीयाश्रीर्विद्या भवति तैरनाश्रयणीया श्रीरविद्यापि न विद्यते नहि सापेक्षैकताप्यस्ति किंवहुना इदमस्ति नास्तीत्यादिविकल्पजातं नकिंचिदपीह विद्यते विदेहमुक्तस्य निष्प्रतियोगिकस्वमात्रत्वादित्यर्थः ॥ ४० ॥ ब्रह्मातिरिक्तं नकिञ्चिदस्तीति श्रुत्यर्थसंस्कृतब्रह्मवित्तमोब्रह्मविद्वरीयान् स्वकर्तव्यार्थाभावात्कृतार्थः, स्वदेहाभिमानाभावात् सदाजीवन्नेव मुक्तो भवति किमुवक्तव्यम् स्वयं ब्रह्मैव सन् देहाद्युपाधिरस्तिनास्तीति विभ्रमनाशात्तदपन्हवात् निर्द्वयं ब्रह्माप्येतीति ब्रह्मैव भवेदित्यर्थः ॥ ४२ ॥

शास्त्रेण नश्येत्परमार्थदृष्टिः कार्यक्षमं नश्यति चापरोक्षात् ॥ ४३ ॥ प्रारब्धनाशात्प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया ॥ ४४ ॥ अहिनिर्ल्वयिनीसर्पनिर्मुक्तोजीववर्जितः ॥ ४५ ॥ वल्मीके पतितस्तिष्ठेत्तं सर्पोनाभिमन्यते ॥ ४६ ॥ एवं स्थूलं च सूक्ष्मं च शरीरं नाभिमन्यते ॥ ४७ ॥ प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥ ४८ ॥ नेतिनेतीति रूपत्वादशरीरोभवत्ययम् ॥ ४९ ॥ विश्वश्च तैजसश्चैव प्राज्ञश्चेति च ते त्रयः ॥ ५० ॥ विराड्हिरण्यगर्भश्च ईश्वरश्चेति तेत्रयः ॥ ५१ ॥ ब्रह्माण्डं चैव पिण्डाण्डं लोका भूरादयः क्रमात् ॥ ५२ ॥ स्वस्वोपाधिलयादेव लीयन्ते प्रत्यगात्मनि ॥ ५३ ॥

( टीका ) अतत्प्रकाशीयं स्वाद्यं तद्ज्ञानमनुशास्तीत्यद्वैतशास्त्रं तेन तच्छ्रवणजन्यज्ञानेन पुराद्भुतप्रपञ्चगतपारमार्थिकसत्यत्वदृष्टिर्नश्येत् ततः प्रपञ्चस्य व्यवहारसमत्वेन व्यावहारिकत्वं प्रतीयते ततोमननप्रादुर्भूतात्परोक्षाद्विज्ञानाद्व्यावहारिकरूपेण कार्यक्षमत्वं नश्यति ततोजगतः प्रतीतिकालस्थायित्वेन प्रातिभासिकत्वं स्फुरति ततोनिदिध्यासनप्रादुर्भूतसम्यग्ज्ञानेन प्रारब्धादिकर्मत्रयनाशात्प्रातिभासिकरूपप्रतिभासनाशोभवति एवं त्रिधात्मप्राया नश्यति तत्त्वज्ञानसमकालं विद्वान् विदेहमुक्तोभवतीत्यर्थः ॥ ५१ ॥ यथा सर्पः स्वावारकत्वचि स्थितायां गतायामपि निरभिमानोवतिष्ठते तथा विद्वान् शरीरत्रयं नाभिमन्यते प्रत्यगभिन्नब्रह्मज्ञानेन मिथ्याभिमतेर्नष्टत्वात् प्रपन्नशरीरोविदेहमुक्तोभवतीत्यर्थः ॥ ५२ ॥ नन्नु विशेषब्रह्मज्ञानात् विश्वतैजसप्राज्ञैः सार्कं पिण्डाण्डसंततिः विराड्हिरण्यगर्भेश्वरैश्च सह भूरादिचतुर्दशलोकयुक्तब्रह्माण्डसन्ततिरपि प्रत्यगभिन्ने ब्रह्मणि विलयं भजते ततोविद्वान् विदेहमुक्तोभवतीत्यर्थः ॥ ५३ ॥

तूष्णीमेव स्थितस्तूष्णीं तूष्णीं सत्यं न किञ्चन ॥ ५४ ॥
कालभेदं वस्तुभेदं देशभेदं स्वभेदकम् ॥ ५५ ॥
किञ्चिद्भेदं न तस्यास्ति किञ्चिद्वापि न विद्यते ॥ ५६ ॥
जीवेश्वरेति वाक् क्वेति वेदशास्त्राः क्व सन्त्विति ॥ ५७ ॥
इदं चैतन्यमेवेति अहं चैतन्यमित्यपि ॥ ५८ ॥
इति निश्चयशून्योयो वैदेही मुक्त एव सः ॥ ५९ ॥
ब्रह्मभूतः प्रशान्तात्मा ब्रह्मानन्दमयः सुखी ॥ ६० ॥
स्वच्छरूपो महामौनी वैदेही मुक्त एव सः ॥ ६१ ॥
ब्रह्मैवाहं चिदेवाहमेवं वापि न चिन्त्यते ॥ ६२ ॥
चिन्मात्रेणैव यस्तिष्ठेद्वैदेही मुक्त एव सः ॥ ६३ ॥

( टीका ) स्वान्तर्बाह्यकलना यथावदनुभूतापि ज्ञानी एवमु-
पशील्य तत्रासंगोदासीनतया तूष्णीं तिष्ठति विज्ञानी ब्रह्मातिरिक्तं
न किंचिदस्तीति अखंडाकारवृत्त्या स्वान्तर्बाह्यकलनां विस्मृत्य तूष्णीं
स्थितो भवति सम्यग्ज्ञानी तत्वज्ञानी वा निर्विकल्पसमाधिपरवशो भूत्वा
स्वान्तर्बाह्यकलनास्ति नास्तीति विभ्रमरहितो भवति विदेहकैवल्यस्य
निष्पत्तियोग्यत्वमात्रत्वादित्यर्थः ॥ ५४ ॥ विदेहमुक्तपदस्यार्थो
मदेवाभेदमिति विभक्तिव्यत्ययः भूतादिकालभेदः घटादिवस्तुभेदः
मत्वकेत्यादिस्वगतभेदश्च नकिंचिदस्ति तस्य ब्रह्ममात्रतया स्वातिरिक्तं
किञ्चिदपि नविद्यत इत्यर्थः ॥५६॥ निर्विशेषब्रह्मणि क्वचि-
त्समष्टिप्रपंचारोपाधारतया जीवोऽयमीश्वरोऽयमिति वा भिदा क्वास्ति
ईश्वरेतिविभक्तिव्यत्ययः चतुर्वेदस्याप्यशाखा क्व सन्ति शाखा इति
लिङ्गव्यत्ययः छांदसः यज्ञादिमिहितिः क्वास्ति परिदृश्यमानमिदं
जगच्चैतन्यमेवेति श्रुतिः क्वास्ति चैतन्यवादीनां ज्ञानं चैतन्यमित्यपि
च एवंविधनिश्चयशून्यो भवति स एव वैदेही मुक्त इत्यभिधीयते
निगमाश्च ते स्मृत्यादिवेदाश्च निगमा निगमा एव वेदाः ते यस्य
सन्तीति वैदेही सम्यक् स्वातिरिक्तवर्जितेति वैदेहीमुक्तो विदेहमुक्त
इत्यर्थः ॥ ५९ ॥ ब्रह्माहमिति ब्रह्मभावनायां ब्रह्मभूतः संकल्प-
वर्जितः कर्तृत्वाभावात् आनंदमयः सुखी भूयानंद-
रूपत्वात् मत्सरोपा हानः कर्तृत्वाद्यभावात्साक्षी समान-
स्यत् ॥६१॥ अहं निरहंमिति वा यत्र निरस्ते किंचिदभावाभावात्
निष्पत्तियोग्यविनाभवो वा यस्ति वैदेही मुक्त एव सः ॥६३॥

चैतन्यमात्रसंसिद्धः स्वात्मारामः सुखासनः ॥६४॥
तुर्यातुर्यः परानंदो वैदेही मुक्त एव सः ॥ ६५ ॥
यस्य प्रपंचभानं न ब्रह्माकारमपीह न ॥ ६६ ॥
अतीतातीतभावो यो वैदेही मुक्त एव सः ॥ ६७ ॥

चित्तवृत्तेरतीतोयश्चित्तवृत्त्यवभासकः ॥ ६८ ॥
सर्ववृत्तिविहीनात्मा वैदेही मुक्त एव सः ॥ ६९ ॥
सर्वमात्माहमात्मास्मि परमात्मा परात्मकः ॥ ७० ॥
नित्यानन्दस्वरूपात्मा वैदेही मुक्त एव सः ॥ ७१ ॥
जीवात्मा परमात्मेति चिन्तासर्वस्ववर्जितः ॥ ७२ ॥
सर्वसंकल्पहीनात्मा वैदेही मुक्त एव सः ॥ ७३ ॥
आत्मज्ञेयादिहीनात्मा यत्किंचिदिदमात्मकः ॥ ७४ ॥
भावाभावविहीनात्मा वैदेही मुक्त एव सः ॥ ७५ ॥
ॐकारवाच्यहीनात्मा सर्ववाच्यविवर्जितः ॥ ७६ ॥
अवस्थात्रयहीनात्मा वैदेही मुक्त एव सः ॥ ७७ ॥
सार्धान्तिकविदेहवाक्यानि समस्तानि ॥

(टीका) अचेतनप्रपञ्चापन्नमिदं चैतन्यमात्मतयावशिष्यत इतिभावेन संसिद्धः स्वातिरिक्तप्रपंचाभावात्स्वात्मारामः सुखमात्रतयावस्थितत्वात्सुखात्मा ॐकाराद्यवस्थातुर्यतुर्यानन्दरूपत्वात् तुर्यतुर्यः परानन्दो वैदेहीत्याद्युक्तार्थम् ॥ ६५ ॥ यस्य प्रपंचोऽस्ति नास्तीति न भाति तद्भावत्वेन प्रमाकारावृत्तिरपि नोदेति स- र्वातीतस्तुर्यतुर्यातीतभावभावनोऽतीताऽतीतभावोयोवैदेही मुक्त एव स इति ॥ ६७ ॥ आत्मवृत्तिमात्रसद्भासकमत्यन्ताभावविलो- पिदेहमुक्त इत्यर्थः ॥६९॥ स्वातिरिक्तसर्वसत्त्वे सर्वमात्मा तदन्तः पातित्वादहमप्यात्मास्मि स्वातिरिक्तसर्वाभावे परमात्मतया योऽव- शिष्यते वैदेही मुक्त एव स इति ॥ ७१ ॥ व्यष्टिसमष्टिप्रपञ्च- योगायोगाभ्यां जीवोऽहमीश्वरोऽहं प्रत्यगहं परोऽहमिति यस्य संक- ल्पोनोदेति वैदेही मुक्त एव सः ॥७३॥ नानाविधप्रभावादात्मज्ञे- यादिहीनात्मा अनिर्देश्यतया अनिर्देश्यभावत्वाद्यत्किंचिदिदमात्म- कोनभवति . स्वातिरिक्तप्रपंचभावाभावविहीनात्मा वैदेहीत्यादि

॥ ७६ ॥ तुर्यातीतस्यादोंकारवाच्यविश्वविराडित्यादिकलनाविवर्जितः ओंकारनिकल्पितयथादिसर्ववाच्यविवर्जितः योऽवस्थात्रयोपलक्षितस्याविद्यातत्कार्यापन्हवसिद्धो भवति वैदेही मुक्त एव स इत्यत्र यस्मिन् व्यष्टिसमष्ट्याख्यस्थूलदेहादिवासनानिरूपविलयं याति सविदेहोमंडामुनिः सर्वापन्हवसंसिद्धब्रह्ममात्रं स एव हि विदेहमुक्तोऽयमिति जीवन्मुक्ता वदन्तीतीतिस्मृतेः ॥ ७७ ॥

सार्वान्तिकविद्यादिविदेहकैवल्यान्तमहावाक्यान्यष्टोत्तरसहस्रं विश्वत्रिपन्मुखगुल्फोऽथविद्धेध्यजंघकः जगन्मिथ्याजानुदेशस्तुपदेशोरुदेशकः ब्रह्मात्मैक्यकटीदेशोविद्वन्मननाभिकः जीवन्मुक्ताख्यहृदस्त्वनुभूतिकरद्वयः । स्वसमाधिस्कन्धदेशस्वस्वरूपाख्यकंधरः फलभूतमहावाक्यफलोविदेहमस्तकः एवं विद्याद्यदेहान्तमहावाक्यकलेवरः वसुर्नामिविशेषात्मा त्रिपान्नारायणोऽस्म्यहम् यन्महावाक्यसिद्धान्तं मुक्तचित्तैकगोचरम् वासुदेवेन्द्रसंज्ञं तं नौमि सर्वात्मकं महः इति ॥

( टीका ) आद्यन्तवाक्यान्यष्टोत्तरसहस्रं महावाक्यरत्नावल्यर्थं ग्रन्थांदोपायांगत्वेनानुसन्धानं करोति विश्वेति पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि इति श्रुतिसिद्धाविद्यापन्हव्यापकत्रिपदी नास्ति राजयानमविद्यापदमिति त्रिपान्नारं तन्मात्रलयायनं पर्यवसानमिति यद्रूपमाहुः सोऽयं त्रिपान्नारायणोऽस्मीति ज्ञानसमकालं विदेहमुक्तो भवतीत्यर्थः महावाक्यरत्नावलिविषयत्वेन स्वमुखरूपं मध्नोति यदिति ब्रह्ममात्रमवशिष्टीति महावाक्यरत्नावलीसिद्धान्तो यत्र पर्यवस्यतीति यन्महावाक्यसिद्धान्तं स्वातिरिक्तभ्रममुक्तचित्तैकगोचरं सर्वभासकतया वस्तु भासयतीति वासुः सत्यमात्मतदभेदेन दीप्यत इति देवः परमात्मा वासुश्चासौ देवश्च वासुदेवः

